रात्राविति दिवानिवृत्त्यर्थम् । प्रपदैरिति अग्रोच्छ्रितपाद इत्यर्थः । स्थानादीनि स्पष्टानि । योगाभ्यासो वक्ष्यमाणः । पुनरिति प्रपदादिभिः । पुनः पुनर्विश्रम्येत्यर्थः ॥ ५१ ॥

यथासामर्थ्यं च—

**ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः ।**
**आर्द्रवासाश्च हेमन्ते शक्त्या वापि तपश्चरेत् ॥ ५२ ॥**

स्थण्डिलवचनमावरणनिवृत्त्यर्थम् । ऋज्वन्यत् ॥ ५२ ॥

सर्वप्रकारस्य वनस्थस्यायमेवाश्रमसर्वस्वभूतः परमो धर्मः—

**यः कण्टकैर्वितुदति चन्दनैर्यश्च लिम्पति ।**
**अक्रुद्धोऽपरितुष्टश्च समस्तस्य च तस्य च ॥ ५३ ॥**

वितुदति विविधं कण्टकादिभिर्व्यथयतीत्यर्थः । एवमुक्तप्रकारेणैव वनस्थाश्रमं पालयेत् ॥ ५३ ॥

**अग्नीन् वाप्यात्मसात् कृत्वा वृक्षावासी मिताशनः ।**
**वानप्रस्थगृहेष्वेव यात्रार्थं भैक्षमाचरेत् ॥ ५४ ॥**

सपत्नीकस्य च पत्नीमरणे पत्न्या एवात्मार्धभूताया अग्निभिर्यो दाहः तदेवात्मसमारोपणम् अन्यस्य तु प्रवृत्ताश्रमस्याशक्तौ वा वैराग्यातिशये वायं विधिः । अनेनैव वादित एव प्रवृत्तिरित्यवसेयम् ॥ ५४ ॥

वानप्रस्थान्तराभावे तु—

**ग्रामादाहृत्य वा ग्रासानष्टौ भुञ्जीत वाग्यतः ।**

आहृत्येति भिक्षाकालव्यतिरेकेण ग्रामप्रवेशनिवृत्त्यर्थम् । वाग्यत इति ग्रामजनैरसंभाषणार्थम् । भोजने तु वाग्यमनस्य प्राप्तत्वादवाच्यम् ॥

वैराग्यातिशये ज्ञानातिशये वा—

**वाय्वशनः प्रागुदीचीं गच्छेद्वा वर्ष्मसंक्षयात् ॥ ५५ ॥**

१. 'दयो व', २. 'णाः' ग. पाठः. ३. 'मा' ख. पाठः. ४. 'म्य वि-श्रम्येत्य', ५. 'रं वन', ६. 'वार्धं' ग. पाठः.

वाग्वशनो[1] निरशन इत्यर्थः । आ वर्ष्मसंक्षयादिति[2] । वर्ष्म शरीरम् आ शरीरसंक्षयादित्यर्थः । आश्रमसंबन्धिफलविशेषानुपदेशाद् दुष्करत्वाच्चायमाश्रमो नैयमिक इत्यवगम्यते । योगाभ्यासोपदेशाच्चापवर्गसाधनत्वात् कैवल्यप्राप्तिसाधनम्[3] । तथाचाम्नायः— "सर्वे एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति" इति ॥ ५५ ॥

इति वानप्रस्थधर्मप्रकरणम् ।

---

## अथ यतिधर्मप्रकरणम् ।

एवं यथोक्तविध्यर्थानुष्ठानात् प्रतिषिद्धार्थोपेक्षणाच्चोत्पन्नवैराग्यतया सञ्जातसम्यग्विज्ञानः परं ब्रह्मापिपयिषुः निरस्ताखिलसांसारिकसुखास्वादाभिलाषः स्वरुचिवैकल्पिकत्वेन —

**गृहाद् वनाद् वा कृत्वेष्टिं सर्ववेदसदक्षिणाम् ।**
**प्राजापत्यां तदन्ते तानग्नीनारोप्य चात्मनि ॥ ५६ ॥**

**अधीतवेदो जपकृत् पुत्रवानन्नदोऽग्निमान् ।**
**शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यात्तु नान्यथा ॥ ५७ ॥**

प्राजापत्येष्टिस्वरूपं समारोपणप्रकारश्च संन्यासविधानशास्त्रादेवावसेयम्[4] । मोक्षे मनः कुर्यात् चतुर्थमाश्रममाश्रयेदित्यर्थः । तुशब्दोऽधीतवेदादिक्रमेणैवेत्यवधारणार्थः । नान्यथेति तु सामर्थ्यप्राप्तत्वात् प्रशंसार्थो नित्यानुवादः । तथाच स्वायंभुवम् —

"अनधीत्य द्विजो वेदाननुत्पाद्य तथात्मजान् ।
अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः ॥"

इति । नन्वनधीतवेदस्य कामं मा भूत् पारिव्राज्यं, पुत्राद्यभावे तु को विरोधः । उक्तमेतद् — 'रागिणामेव गार्हस्थ्यमि'ति । यद्यदि कृतदारोऽपि पुत्राद्युत्पत्तावप्रयत्यैव पारिव्राज्यमाश्रयेत् ततश्चोदनार्थातिक्रमान्मोक्षमिच्छन् व्रजत्यध इति युक्तमेव । वीतरागविषयतया तु "यमिच्छेत् तमावसेदि"त्युक्तमेव । स्पष्टमन्यत् ॥ ५६,५७ ॥

---

१. 'नोऽनश्नन्निम', २. 'ति । शरीरसं' ग. पाठः. ३. 'कारणम् ४. 'दव' क. पाठः. ५. 'तश्च चोद' ग, पाठः.

**सर्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः ।**
**एकारामः परिव्रज्य भैक्षार्थं ग्राममाश्रयेत् ॥ ५८ ॥**

सर्वेभ्योऽपकारिभ्योऽपि भूतेभ्योऽनभिद्रोहेण हितः सर्वभूतहितः । यद्वा आत्माभेददर्शनेन सर्वभूतः सर्वात्मभावाच्चानभिद्रोग्धा भवत्येव । हितः शान्त इति विशेषणविशेष्यत्वं, भवत्यशान्तो व्यभिचारादिना हितः सांख्यादियोगानुसारेणाहितोऽपि शान्तः तद्व्यवच्छेदार्थं हितः शान्त इति । यद्वा हितो हिंसानारम्भकः शान्तोऽनुग्रहानारम्भकः । तथाच गौतमः— "हिंसानुग्रहयोरनारम्भी"ति । त्रिदण्डी मनोवाक्कायदण्डाभिप्रायेण "वाग्दण्डोऽथ मनोदण्ड" इत्यादि । त्रिदण्डसंयोगेनैव कमण्डल्वादिसंबन्ध इति गम्यते । एक एवारमते यस्त्वात्मरतित्वेन, स एकारामः । एवं ग्रामादुच्छिन्नाभिलाषः परिव्रज्यारण्यनित्यो भूत्वा भिक्षार्थमेव ग्राममाश्रयेद् नान्यदा ग्रामे मुहूर्तमातिष्ठेदित्यभिप्रायः ॥ ५८ ॥

भैक्षार्थमपि च ग्रामं प्रविश्य समाहितमनाः—

**अप्रमत्तश्चरेद्भैक्षं सायाह्नेऽनुपलक्षितः ।**
**रहिते भिक्षुकैर्ग्रामे यात्रामात्रमलोलुपः ॥ ५९ ॥**

स्त्र्यादिसन्दर्शनादत्यन्तजितेन्द्रियत्वेऽपि प्रमादो मा भूदित्यप्रमत्तश्चरेत् । भैक्षं भिक्षाणां समूहो भैक्षम् । ततश्चैकान्ननिवृत्तिः । सायाह्नेऽपराह्णः, तस्मिन् । अनुपलक्षितः भिक्षालाभनिमित्तेन पाण्डित्यादिनात्मानमप्रख्यापयन्नित्यर्थः । अपराह्णेऽपि च यदा सर्वभिक्षुकैर्ग्रामो रहितस्तदा । यात्रामात्रं शरीरधारणमात्रार्थम् । अलोलुपः अलम्पटः । यद्वा द्विविधपरिव्राजकाभिप्रायं भिक्षाटनद्वैविध्यमत्रोच्यते । तत्राप्रमत्तश्चरेदित्यनेनैकान्नप्रतिषेधेन त्रिदण्डाद्युपलक्षितस्य भैक्षोपदेशः । इतरेण त्रिदण्डाद्यनुपलक्षितस्य ज्ञानभिक्षोर्यात्रामात्रमेकान्नोपदेशः । तेनैव च रहिते सोपलक्षणभिक्षुकैर्ग्राम इति कालान्तरोपदेशः । तथाच गौतमः "भिक्षार्थी ग्राममियाज्जघन्यमनिवृत्तं चरेदि"त्येकान्नाभिप्रायेणैवाह । अन्यथा तु भैक्षार्थीत्येवावक्ष्यत् ।

१. 'ति तु वि' क. पाठः. २. 'ति त्रि' ग. पाठ.. ३ 'द्भुर्स', ४. 'षु' क. पाठः. ५. 'त्वा भिक्षाप्रयोजनं भि' ग. पाठः. ६. 'पारिव्राज्याभि', ७. 'षेण भि', क. पाठः.

जघन्यमिति च भिक्षुकान्तरापेक्षयैव कालवचनम् । यत्तु संवर्तोक्तम् —

"अष्टौ भिक्षाः समादाय प्रक्षाल्य निशि[1] वाग्यतः"

इति, तत्सोपलक्षणविषयम् । इतरत्र त्वेकभिक्षणमेव । तथाच श्रुतिः — "अथान्यः परिव्राडेकशाटीपरिहितो मुण्ड उदरपात्र्यरण्यनित्यो भिक्षार्थी" इति । अनेनैतदेव स्पष्टीकरोति ॥ ५९ ॥

यथायोगं व्यवस्थया तु —

**यतिपात्राणि मृद्वेणुदार्वलाबुमयानि च ।**
**सलिलं शुद्धिरेतेषां गोबालैश्चावघर्षणम्[2] ॥ ६० ॥**

मृन्मयादीनि यतिपात्राणि भिक्षार्थं भोजनार्थं च । चशब्दः पत्रपुटाद्यर्थः । स्पष्टमन्यत् ॥ ६० ॥

एवञ्च नित्यमुत्पन्नवैराग्यः[3] पूर्वोक्तक्रमेण वा पारिव्राज्यमास्थाय ततः—

**सन्निरुध्येन्द्रियग्रामं रागद्वेषौ प्रहाय च ।**
**भयं हित्वा च भूतानाममृतीभवति द्विजः ॥ ६१ ॥**

परब्रह्मप्राप्तिरमृतीभावः । द्विजग्रहणं ब्राह्मणार्थं, तेषामेव संन्यासोपदेशात् । ऋज्वन्यत् ॥ ६१ ॥

किञ्च —

**कर्तव्याशयशुद्धिस्तु भिक्षुकेण विशेषतः ।**
**ज्ञानोत्पत्तिनिमित्तत्वात् स्वातन्त्र्यकरणाय च ॥ ६२ ॥**

आशयः शरीरं तच्छुद्धिः पवनजयादिना कर्तव्या ज्ञानभिक्षुणापि, विशेषतस्त्वितरेण भिक्षुकेण । सोपलक्षणपरिव्राजकेनेति यावत् । ज्ञानोत्पत्तिनिमित्तत्वाद् विशुद्धाशयस्यैव हि ज्ञानोत्पत्तिरित्यभिप्रायः । स्वातन्त्र्यकरणाय च परकायप्रवेशादिसिद्ध्यर्थम् ॥ ६२ ॥

---

१. 'खिलास्ततः' ग. पाठः. २. 'स्तु', ३. 'ग्यः क' क. पाठः.

अथ किमाशयशुद्ध्यादिना स्वातन्त्र्यकरणमेवात्र परमार्थः । नेत्युच्यते । स्वातन्त्र्यस्याहिरण्यगर्भलोकमात्रजयहेतोः[1] क्षयिष्णुतया च संसारहेतुत्वाद् दुःखरूपतैव । अतो निरतिशयानन्दावाप्त्यर्थं[2] स्वातन्त्र्यकरणमात्रपरितोषिणा न भवितव्यम् । किं तर्हि—

**अवेक्ष्यो गर्भवासश्च कर्मजा गतयस्तथा ।**
**आधयो व्याधयश्चैव जरा रूपविपर्ययः ॥ ६३ ॥**
**भवो जातिसहस्रेषु प्रियाप्रियविपर्ययः ।**
**ध्यानयोगेन सन्दृश्यः सूक्ष्म आत्मात्मनि स्थितः ॥**

गर्भवासादयो ह्याहिरण्यगर्भव्यापिनः क्लेशाः, तांश्चावेक्ष्य तत्स्वरूपालोचनाद् विरक्तो व्युत्थाय ध्यानयोगेन वक्ष्यमाणप्रकारेण सूक्ष्मः परमात्मा विज्ञानात्मन्येवाव्यतिरेकेणावस्थितः सम्यग् द्रष्टव्यः । सर्वमेव हि कर्मकाण्डमसारतया मन्तव्यमित्यभिप्रायः । स्पष्टमन्यत् ॥ ६३, ६४ ॥

यतश्चैतदेवम्, अतः—

**नाश्रमः कारणं धर्मे क्रियमाणो भवेद्धि सः ।**

कर्मपक्षान्तर्गतेराश्रमपरिग्रहोऽप्यसार इत्यभिप्रायः[5] ।

**अतो यदात्मनोऽपथ्यं परस्य न तदाचरेत् ॥ ६५ ॥**

परस्य प्रकृष्टस्याद्वैतस्य परमात्मनो यदपथ्यं संसारकारणं कर्मादि[4] न तदाचरेत् । ध्यानयोगेनैव तु[6] नित्यं परमात्मनो निदिध्यासनं कुर्यादित्यर्थः । नन्वेवं सति यदृच्छाप्रचारितैव प्राप्नोति, कर्मणोऽनङ्गीकरणात् । मैवम् । परलोकार्थतया हि कर्मणोऽनङ्गीकरणं, क्रियमाणं हि कर्म परलोकारम्भकं मा भूदिति विहितस्याननुष्ठानम् । निषिद्धं पुनरनुष्ठीयमानमेव परलोकारम्भकमिति तत्परिजिहीर्षया निषिद्धेषु यथानिषेधमेव वर्तितव्यम् ॥ ६५ ॥

एवञ्चेत् कर्मसंन्यासिनामपि प्रतिषिद्धार्थवर्जनमविरुद्धं मन्यमान आह—

**सत्यमस्तेयमक्रोधो ह्रीः शौचं धीर्धृतिर्दमः ।**
**संयतेन्द्रियता विद्या धर्मः सार्व उदाहृतः ॥ ६६ ॥**

---

१. 'जयमात्रहे' क. पाठः. २. 'न्दप्राप्त्य' ग. पाठः. ३. 'नया व्यु' क. पाठः. ४. 'मादिप' ग. पाठः. ५. 'यः । स्पष्टमन्यत् ।', ६. 'तु प' क. पाठः.

विधिस्वरूपत्वेऽपि च सत्यादीनामनृतवर्जनादिरूपतया प्रतिषिद्ध-पक्षीयत्वमेवेत्यविरोधः । ह्रीर्लज्जा । वर्जनीयतया च तदुपन्यासः पुनराजननाभिप्रायेण वा कर्तव्यतायामप्यविरोधः । महत्येवेयं विदुषो लज्जा यत्पारतन्त्र्येण गर्भवासादिक्लेशवज्जन्मसंगतिः । शौचं तु त्रिविधमप्यपवर्गानुगुण्यात् कर्तव्यतयैवोपदिश्यते । धीः प्रज्ञा । धृतिर्धारणा । दमो द्वन्द्व-सहिष्णुता । संयतेन्द्रियता स्पष्टैव, रूपादिप्रपञ्चोपरतिध्यानं वा । विद्या ब्रह्मणः साक्षात्करणम् । सर्वं चैतत् सत्यादि तदङ्गतयोपदिश्यमानं कर्म-संन्यासिनामप्यविरुद्धमित्यभिप्रेत्याह —अयं सत्यादिको धर्मः सार्व उदाहृत इति । सर्वेषामयं सार्वः । उदाहृत इत्युदाहरणार्थमेतत् । अन्यदपि भिक्षाटनादि सर्वविषयमविरुद्धमित्यवसेयम् । अतश्च परमहंसानामपि न कामचारतेत्यभिप्रायः । अतः सूक्तः सोपलक्षणादिभेदेन परिव्राजकाश्रमः । अत्र केचिदिमं पारिव्राज्यप्रकारभेदमभ्यसूयन्तः सोपलक्षणमेव पारिव्राज्यं मन्यन्ते । तथाचोक्तं दक्षेण —

"यस्यैतल्लक्षणं नास्ति प्रायश्चित्ती न चाश्रमी ।"

इति । वसिष्ठेनापि—"परिव्राजकः सर्वभूताभयदक्षिणां दत्त्वा प्रतिष्ठेते"त्युपक्रम्य तद्धर्मकलापमभिधायोपसंहृतं "यज्ञोपवीत्युदकमण्डलुहस्तः शुचिर्ब्राह्मणो वृषलान्नवर्जी न हीयते ब्रह्मलोकादि"ति । त्रिदण्डसंयोगेनैवं कमण्डल्वादिसंगतिरित्युक्तमेव । अतोऽनुपलक्षणः परिव्राडिति दुर्भणम् । भिक्षाटनश्लोकस्त्वन्यथैव व्याख्यातः । प्रसिद्धस्वायंभुवादिशास्त्रव्यतिरिक्तानि तु स्मृत्यन्तराण्यस्पष्टमूलत्वादेवैतद्विरोधेऽनादृत्यान्येव । किञ्चेहापि शौचस्य सर्वधर्मत्वं, यज्ञोपवीतं च शौचाङ्गम्, अतस्तेनापि सर्वार्थेनैव भाव्यम् । एवञ्चेत् कथं तदभावः परिव्राजकस्याशङ्क्येत । अतोऽप्ययुक्ततैव । समाचारविरोधश्च स्थित एवेत्येषा दिक् । अत्राभिधीयते—अपवर्गार्थं हि पारिव्राज्यं ज्ञानैकसाधनम् । न तत्र कर्मणा प्रयोजनमित्युक्तमेव । यत्तु वाचनिकत्वेन त्रिदण्डादिधारणं, तदप्याद्यपारिव्राज्यविषयमेव । इतरस्य त्वाश्रमनियमानङ्गीकरणं कर्मपक्षीयत्वेन । उक्तं च—'नाश्रमः कारणं

१. 'प्यानु', २. 'व च क', ३ 'योग इत्यु' क. पाठः. ४. 'नापि भा' ग. पाठः. ५. 'भेवैतत् । वि' क. पाठः.

धर्मे" इति । यत्तु वासिष्ठं "यज्ञोपवीत्युदकमण्डलुहस्त" इति, तदप्यकर्मसंन्यासिविषयमेव । कथमवगम्यते, "मुण्डोऽममोऽपरिग्रह" इत्युपक्रम्य ततः कल्पान्तरत्वेन "ब्राह्मणकुले वा[1] यल्लभेत तद् भुञ्जीत" इति विशेषानुक्रमणाद्, आदेतश्च 'मुण्डोऽममोऽपरिग्रह' इत्यनेन कर्मसंन्यासिनामखिलयज्ञोपवीतादिपरिग्रहप्रतिषेधात् । अत एवं[2] चेतरार्थं पुनर्यज्ञोपवीतादिप्रतिप्रसवः । अन्यथा त्वविरोधितयैव प्राप्तत्वात् तद्वचनमसमञ्जसं स्यात् । न चाविशेषेणै[3] प्रतिप्रसव इत्याशङ्कनीयं, क्रमभेदेनोपन्यासात् । अन्यथा हि 'एकशाटीपरिहितोऽजिनेनै[4] वे'ति वासःप्रतिप्रसवानन्तरमेतदप्युक्तमभविष्यत् । प्रकारभेदे त्वविरोधः । वाशब्दस्य च व्यवस्थयैवोपपन्नत्वादन्याय्यविकल्पना न स्यात् । स्मृत्यन्तरे तु विस्पष्टैव व्यवस्थाप्रमाणाम्— "अथान्यः परिव्राडेकशाटीपरिहितो मुण्ड उदरपात्र्यरण्यनित्योऽशक्तौ भिक्षार्थी ग्रामं प्रविशेत् सुसायं प्रदक्षिणेनाविचिकेत्सन् सार्ववर्णिकं भिक्षाचरणमभिशस्तपतितवर्जमयज्ञोपवीती शौचनिष्ठः काममेकं वैणवं दण्डमाददीत" इत्यादि । आम्नायश्च "व्युत्थायाथ भिक्षाचर्यं चरन्ती"ति समस्तैषणाप्रतिषेधेन कर्मव्युत्थानं दर्शयति । तथाच "बाल्यं पाण्डित्यं च निर्विद्याथ मुनिरि"त्युक्त्वा "ततो व्युत्थाय मौनं चामौनं च निर्विद्येते"त्यमौनमाश्रमान्तरविहितं तद्विहितं मौनम् उभयमप्यपास्य ज्ञानैकनिष्ठोऽनन्तरमथ ब्राह्मणः परमहंसः स्यादित्यभिप्रायः । तथाचाश्रमानवक्लृप्तिं दर्शयति— "स ब्राह्मणः केन स्याद् येन स्यात् तेनेदृश एव भवती"ति । नात्राश्रमनियमव्यपदेशः, कर्मपक्षीयत्वादाश्रमविधानस्य । अन्यथा च विरोधादसमञ्जसतैव स्यात् । अतः सूक्तं "नाश्रमः कारणं धर्मे" इत्यादि । यत्तु शौचाङ्गतया यज्ञोपवीतप्राप्तिरिति, तदपि विद्यमानोपवीतविषयतयैवावसेयम् । तदभावेऽपि स्त्र्यादीनां शौचाविघातात् । यथाचोपवीताद्यप्राप्तिस्तथोक्तमेव । अतश्चैवमादयोऽपि निन्दार्थवादा विद्यमानविषयतयैवं द्रष्टव्याः —

---

१. 'लेन वा', २. 'वेत', ३. 'णैव प्र', ४. 'नेति' ग. पाठः. ५. 'ब्राजक एक' क. पाठः. ६. 'न चावि', ७. 'येमभि', ८. 'तोऽपि व्यु' क. पाठः, ९. 'णप' ग. पाठः. १०. 'दपि वि', ११. 'वब्राद्र' ख. पाठः.

"विना यज्ञोपवीतेन मुक्तकक्ष्यशिखोऽपि वा ।
अकृत्वा पादशौचं च नाचान्तोऽपि विशुध्यति ॥"

इति । अन्यथा विशिखस्य ब्रह्मचारिणोऽप्यशुद्धिप्रसङ्गः । तस्माद् विद्यमानानामेवोपवीतादीनां शौचाङ्गत्वादनवद्यम् । अनया दिशा सर्ववाक्यानि योजनीयानि । स्मृत्यन्तरेभ्यश्च विष्णवादिभ्यो विशेषतश्चतुर्विधः पारिव्राज्यप्रकारभेदोऽभ्युपगन्तव्यः । एवं तावन्मोक्षार्थत्वेन पारिव्राज्यमुक्तम् । इदमिदानीं चिन्त्यते — कुतः पुनरात्मनो बद्धस्य मोक्षोपदेशोऽयम् । यदि तावत् स्वाभाविको बन्धः, ततस्तदुच्छेदानुपपत्तेर्दुश्लिष्टतैव । अथ हेत्वन्तरात्, तदपि शुद्धत्वाद् ब्रह्मणोऽनुपपन्नमेव । किञ्च यदि शुद्धस्याप्यागन्तुको बन्धहेतुः स्यात्, ततो मोक्षप्रयत्नानर्थक्यमेव स्याद्, मुक्तस्यापि तत्सम्भवात् । सत्यं, यदि हेत्वभ्युपगमः स्यात् । तत्त्वाग्रहणात्मकत्वेनाविद्योत्थत्वात् प्रपञ्चस्यैवमादिचोद्यानवकाश एव । न चात्मनो व्यतिरिक्तं वस्त्वन्तरं प्रमाणावगम्यं, यद् बन्धहेतुतयोच्येत । आत्मनैव त्वात्मनोऽनुपपन्न एव बन्धादिव्यवहारः । भवति त्वज्ञानादेकस्मिन्नप्यग्रहणनिमित्तश्चन्द्र इव द्वित्वप्रतिभासः । तत्त्वेन ब्रह्मणो नान्यद् वस्त्वन्तरमस्तीति ब्रह्मविदां स्थितिः । कथं तर्हि विज्ञानात्मनां नानेवोपलब्धिः, अज्ञाननिमित्तैव सेत्युक्तम् ॥ ६६ ॥

इममेवार्थं योगीन्द्रः प्रपञ्चयन्नाह —

**निश्चरन्ति यथा लोहपिण्डात् तप्तात् स्फुलिङ्गकाः ।**
**सकाशादात्मनः सर्वे आत्मानोऽपि तथैव हि ॥ ६७ ॥**

नन्वेवं परमात्मोपादानत्वं विज्ञानात्मनामुक्तं स्वाभाविकत्वेन । यथैवाग्निवर्णात् तप्ताल्लोहपिण्डाद् विष्फुलिङ्गाः स्वभावादेव निमित्तान्तरानपेक्षा निश्चरन्ति, एवं परमात्मनः सकाशाद् विज्ञानात्मानोऽपीत्यस्यार्थः । मैवम्, उपादानपक्षस्य प्रत्युक्तत्वात् । कस्तर्ह्यस्यार्थः, अभिन्नस्यापि ब्रह्मणो-

---

१. 'भ्यो वि', २. 'ज्यमे', ३. 'तद्', ४ 'स्स' ग. पाठः.

ऽयमविद्योत्थः प्रपञ्च इति । यथानित्येनाभिन्नस्यापि तदग्रहणात् पिण्डाद् विष्फुलिङ्गतया भेद उपादानोपादेयत्वं च प्रतिभासते, एवमेवाभिन्नस्यापि परमात्मनो विज्ञानात्मानोऽभिन्नास्तदुपादानाश्च तत्त्वाग्रहणात् प्रतिभासन्त. इत्यनवद्यम् । एवमपि यथा[1] द्वैताश्रया धर्माधर्मादिव्यवस्थोपपद्यते कर्मकाण्डाविरोधित्वं च, तथोपरिष्टाद् वक्ष्यामः ॥ ६७ ॥

एवं तावदवच्छिन्नोऽविद्यया विज्ञानात्मानेकदुःखहेतौ संसारे यथा परिवर्तते, तथा प्रपञ्चयति—

**तत्रात्मा हि स्वयं किञ्चित् कर्म किञ्चित् स्वभावतः ।**
**करोति किञ्चिदभ्यासाद् धर्माधर्मभवात्मकम् ॥ ६८ ॥**

तत्र अस्मिन् द्वैतप्रपञ्चेऽवस्थितो विज्ञानात्मा स्वयमेव किञ्चित् कर्म करोति यथा विहितानुष्ठानं, किञ्चित् स्वभावतो जातमात्र एव स्तनपानादि, किञ्चिदभ्यासाद् व्युत्थायारण्यवासादि । धर्माधर्मभवात्मकं स्तनपानादि धर्माधर्मव्यतिरिक्तं भवात्मकम् । अथवा धर्माधर्माभ्यां निमित्तभूताभ्यां संसारबीजत्वेन भवात्मकमिति योज्यम् । धर्माधर्मयोरप्यविद्यान्तर्गतत्वाद् भ्रान्त्यैव संसारबीजत्वं निस्सङ्गत्वाद् ब्रह्मणोऽवसेयम् । कथं पुनर्निस्सङ्गं ब्रह्मेत्यवगच्छामः, अजातत्वाद् ब्रह्मणः । ननु जायत एवात्मा, नहि, प्रागपि जन्मनो विद्यमानत्वात् ॥ ६८ ॥

कथं तर्हि जातव्यपदेशः कथं वा प्राग्जन्मनो भावः । उच्यते—

**निमित्तमक्षरं कर्ता बोद्धा ब्रह्म गुणी वशी ।**
**अजः शरीरग्रहणात् स जात इति कीर्त्यते ॥ ६९ ॥**

किमिदं शरीरग्रहणादिति, शरीरतया व्यतिरेकावगमादित्यर्थः । व्यतिरेकावगमनिमित्तत्त्वेन चाक्षरत्वेऽपि ब्रह्मणः कर्तृत्वाद्युपपत्तिः, बोद्धृतयां च सम्यग्ज्ञानोत्पत्त्या परप्राप्त्या ब्रह्मत्वं, विपर्ययाच्च रागद्वेषादिभिर्गुणैर्[2]वशीकृतस्याप्यनुच्छिन्न एव जन्मसंबन्धः । ततश्चाज्ञानतः शरीरग्रहणाज्जात[3] इत्युपपन्नम् ॥ ६९ ॥

१. 'था व', २. 'दिगुणै', ३. 'णात् संजा' ग. पाठः।

इदानीमज्ञानातिरेकाच्छरीरग्रहणं प्रपञ्चयति—

**सर्गादौ स यथाकाशं वायुं ज्योतिर्जलं महीम्।**
**सृजत्येकोत्तरगुणांस्तथादत्तेऽभवन्नपि ॥ ६० ॥**

यथैव हि भगवान् प्रजापतिर्महाप्रलयोत्तरकालमादिसर्गे प्रजाः सिसृक्षुर्महाभूतान्याकाशादीनि पृथिव्यन्तानि शब्दस्पर्शरूपरसगन्धैरेकद्वित्रिचतुष्पञ्चगुणयुक्तानि जगन्निर्वृत्त्यर्थं सृजति एवमेवायं प्रतिजन्मधर्माद्यनुगृहीतः स्वयमेवादत्ते। अभवन्नपि अनुत्पद्यमानोऽपि शरीरनिर्वृत्त्यर्थमित्यर्थः। ननुच महाप्रलयसर्जने नैव पण्डितैरिष्येते स्रष्टुरनुपस्थानादिदोषप्रसङ्गादिति वदद्भिः। पारमार्थिकत्वे सत्येवमादिचोद्यप्रसङ्गोऽपि स्यात्। अज्ञानलक्षणे तु प्रपञ्चविलासेऽनुपपत्तिचोद्यं[१] चाचोद्यमेव। यदि च स्वरूपेऽप्यागमः प्रमाणं, तदानन्यपरागमप्रतिपन्नेऽर्थे प्रमाणान्तरविरोधाभिधानमयुक्तमेव। यद्वा परमतनिरासायैवायं श्लोकः। यथैव हि स्रष्टारमिच्छतां सर्गादौ प्रजापतिराकाशादीनि शरीरव्यवहारसिद्ध्यर्थमुत्पादयति, एवमेवासत्यपि स्रष्टरि स्वयमेवाविद्यानिबन्धनप्रपञ्चानुसारेणाभवन्नप्यजायमानो जन्मव्यपदेशाय आदत्ते गृह्णातीत्यर्थः ॥ ६० ॥

यथाचाज्ञाननिबन्धन एव शरीरप्रपञ्चो न वस्तुनिबन्धनः, तथा प्रपञ्चयति—

**आहुत्याप्याय्यते सूर्यस्तस्माद् वृष्टिरथौषधिः।**
**तदन्नं रसरूपेण शुक्रत्वमुपगच्छति ॥ ६१ ॥**

स्वाधिकारनिर्वृत्त्यर्थमेव हि हूयमानयानुषङ्गिकफलत्वेन आहुत्याप्याय्यते सूर्यः। तदुक्तं जाबालिप्रश्ने[२] श्रुतावपि—"वेत्थ यथेति व्योमाहुत्ये"-ति प्रकृत्य "तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेः पुरुषः संभवती"[३]ति ॥ ६१ ॥

नित्यानामेव चार्थानां[४] कार्यतयाभिधानात् प्रपञ्चमात्रमेवैतदिति स्पष्टयति—

**स्त्रीपुंसयोः संप्रयोगे विशुद्धे शुक्रशोणिते।**
**पञ्च धातून् स्वयं षष्ठानादत्ते युगपत् प्रभुः ॥ ६२ ॥**

१. 'द्यमचो', २. 'जै' ग. पाठ.. ३. 'संभती' क. पाठः ४, 'वा' ग. पाठः.

शुक्लशोणितविशुद्धिर्भिषक्छास्त्रात्[1] पूतिगन्धादिव्युदासेनावसेया । धातुशब्दोऽयमाकाशादिमहाभूतवचनः । तान् पञ्च । स्वयं षष्ठानादत्ते । स्वयं षष्ठानिति यथैव ह्यत्यन्ताव्यतिरिक्तस्यैवात्मनो व्यतिरिक्तवदुपादानव्यपदेशो भ्रान्तिनिबन्धनः, तथैवाकाशादीनामपीत्यवसेयम् ॥ ६२ ॥

अस्यैव दार्ढ्यार्थं भूयः प्रपञ्चमाह —

**इन्द्रियाणि मनः प्राणो ज्ञानमायुः सुखं धृतिः ।**
**धारणाप्रेरणे दुःखमिच्छाहङ्कारमेव च ॥ ६३ ॥**
**प्रयत्नाकृतिरूपाणि स्वरद्वेषौ भवाभवौ ।**
**तस्येदमात्मजं सर्वमनादेरादिमिच्छतः ॥ ६४ ॥**

इन्द्रियादि सर्वमेवैतत्[2] तस्यैवाकलङ्कस्य ब्रह्मणोऽनादेरादिमिच्छतो व्यामोहातिरेकादात्मनोऽव्यतिरेक्यपि व्यतिरिक्तवदाभासत इत्यर्थः । विज्ञानात्मतामापन्नस्यापि चात्मीयधर्माधर्मानुसारेणात्मजमेवैतद् वैचित्र्यं सुखदुःखादिलक्षणमित्यवसेयं, यथेन्द्रियाणि कस्यचिदविकलानि कस्यचित्तु विपर्यय इत्येवं सर्वत्र योज्यम् । इन्द्रियाणि चक्षुरादीनि हस्तादीनि च । उभयात्मकत्वात्तु मनसो भेदेनाभिधानम्[3] । प्राणादि प्रसिद्धम् । सुखत्वेऽपि च धृतेस्तत्कारणत्वोपचारात् पृथग्वचनम् । धारणाप्रेरणे शरीरस्यार्थान्तराणां वा । दुःखं प्रसिद्धम् । इच्छाहङ्कारयोः समासाभिधानं तुल्यहेतुत्वात् । प्रयत्नः स्वाभाविकी कर्मविशेषप्रवृत्तिः । आकृतिरूपे प्रसिद्धे । समासकरणं स्वाभाविकत्वेनैकरूप्यात् । स्वरः शब्दः तद्ग्रहणं च सर्वविषयाणामुपलक्षणार्थम् । भवः संसारः अभवो मोक्षः[4] । अपिच यथाद्वैतव्यवहारस्य पारमार्थिकत्वमपवर्गानुगुण्यं च तथोपरिष्टाद् वक्ष्यामः । व्यामोहनिबन्धनत्वात् तु तत्प्रवृत्तेः सर्वत्र प्रपञ्चाभिधानमविरुद्धम् ॥ ६३,६४ ॥

अविद्यावच्छिन्नस्य[5] च ब्रह्मणः शरीरसंबन्धं तत्स्वरूपं च प्रपञ्चयति —

**प्रथमे मासि संक्लेदभूतो धातुविमूर्छितः ।**
**मास्यर्बुदं द्वितीये तु तृतीयेऽङ्गेन्द्रियैर्युतः ॥ ६५ ॥**

---

१. 'सद्वारेणाव' ग. पाठः. २. 'मेत', ३. 'दाभि' क. पाठः, ४. 'क्षः एवमपि', ५. 'स्य ब्र' ग. पाठः.

निषिक्तं रेतः प्रथमे मासि संक्लिन्नमघनीभूतं यस्य शरीरिणः स संक्लेदभूतः । धातवो महाभूतानि विशेषात्मनाभिव्यक्तानि विमूर्छितानि यस्य सः धातुविमूर्छितः । एवञ्च कललादिक्रमेणार्बुदावस्थां द्वितीये प्राप्य तृतीये प्रविभक्ताङ्गेन्द्रियाधिष्ठानो भवति ॥ ६५ ॥

इदानीमङ्गेन्द्रिययोगं विवेचयति —

**आकाशाल्लाघवं सौक्ष्म्यं शब्दं श्रोत्रं तथा बलम् ।**
**वायोस्तु प्रेरणं त्वेषां व्यूहनं रौक्ष्यमेव च ॥ ६६ ॥**
**अग्नेस्तु दर्शनं पक्तिमौष्ण्यं रूपप्रकाशनम् ।**
**रसेभ्यो रसनं शैत्यं स्नेहक्लेदनमार्दवम् ॥ ६७ ॥**
**भूमेर्गन्धं तथा घ्राणं गौरवं मूर्तिमेव च ।**
**आत्मा गृह्णात्यतः सर्वं तृतीये स्पन्दते ततः ॥ ६८ ॥**

आकाशादिभ्यो महाभूतेभ्योऽदृष्टानुसाराल्लाघवादीन् गुणान् शब्दादींश्च[1] विषयान् श्रोत्रादीनीन्द्रियाणि आत्मा संसारं प्रपित्सुरत एवाविद्याप्रपञ्चानुसाराद् गृह्णाति । तस्माद् द्वैतव्यवहारान्तःपाती[2] कर्मानुबद्धः स्पन्दत इत्यादि योज्यम् । प्रमाणान्तरमूलत्वाच्छास्त्रस्यार्थस्यान्यपरत्वाच्च स्मृतेरिन्द्रियादीनां भौतिकत्वाहङ्कारित्वादि[3]विवेकाभिनिवेशो न[4] कार्यः । अधिष्ठानानि चाकाशादिभ्यः[5] । इन्द्रियशक्तयस्तु ज्ञानानुपातित्वादात्मविषयतयैवावसे[6]याः । स्पष्टमन्यम् ॥ ६६—६८ ॥

भिषक्छास्त्रानुसारेणैव च —

**दौहृदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ।**
**वैरूप्यं मरणं वापि तस्मात् कार्यं प्रियं स्त्रियाः ॥ ६९ ॥**

दौहृदो भोजनादिविशेषाभिलाषः । स्पष्टमन्यत् । प्रमाणान्तरानुसारिणोऽप्यत्राभिधानमक्रियायां दोषवत्त्वज्ञापनार्थम् ॥ ६९ ॥

---

१ 'दीन् वि' ग. पाठः. २ 'ति', ३. 'रिकत्वा', ४ 'नातीव का', ५. 'भ्यः श', ६ 'धर्मेत' क. पाठः

एवं तृतीयेऽङ्गेन्द्रिययुक्तस्य क्रमशः—

**स्थैर्यं चतुर्थे त्वङ्गानां पञ्चमे शोणितोद्भवः ।**
**षष्ठे बलस्य वर्णस्य नखरोम्णां च सम्भवः ॥ ७० ॥**

किञ्च—

**मनसा चेतसा युक्तो नाडिस्नायुसिराततः ।**
**सप्तमे चाष्टमे चैव त्वचावान् स्मृतिमानपि ॥ ७१ ॥**

चशब्दात् षष्ठे च मनआदिसंयोगोऽदृष्टवशाद् भवत्येवेत्यवगन्तव्यम् ॥ ७१ ॥

परिपूर्णेन्द्रियस्यापि तु यस्मात्—

**पुनर्गर्भं पुनर्धात्रीमोजस्तस्य प्रधावति ।**
**अष्टमे मास्यतो गर्भो जातः प्राणैर्विमुच्यते ॥ ७२ ॥**

यस्य हि जन्तोरन्यस्यां धात्र्यां मातरि गर्भो निष्पन्नः तस्यैवाष्टमे मासि प्रसवः स्यात् । तस्य चौजः प्राणः पूर्वस्माद् गर्भात् पुनरन्यं गर्भं पूर्वायाश्च धात्र्या मातुः पुनरन्यां धात्रीं मातरं प्रधावति सञ्चरति यस्मात्, तस्मादष्टमे मासि जातः प्राणैर्विमुच्यते न जीवतीत्यर्थः ॥ ७२ ॥

निर्व्यूढे त्वष्टमे मासि कल्याणतः—

**नवमे दशमे मासि प्रबलैः सूतिमारुतैः ।**
**निस्सार्यते बाण इव यन्त्रच्छिद्रेण सज्वरः ॥ ७३ ॥**

प्रमाणान्तरमूलत्वान्नवमादिग्रहणं मासान्तराणामप्युपलक्षणार्थम् । प्रबलैः सूतिमारुतैरिति पराधीनतया जन्मप्रदर्शनं लज्जाकरत्वेन वैराग्यातिशयार्थम् । तथैव स्पष्टयति यन्त्रच्छिद्रेण सज्वर इति । एवमुत्तरत्राप्यस्थिसंख्याद्युपवर्णनादौ व्याख्येयम् ॥ ७३ ॥

---

१. 'ति गम्यते ॥', २. 'वापि प्र', ३. 'पि ल' क. पाठः.

इदमेवाविद्याविलसितं भूयः प्रपञ्चयति —

**तस्य षोढा शरीरं तत् षट् त्वचो धारयन्ति हि ।**
**षडङ्गानि तथास्थ्नां च सषष्टिं वै शतत्रयम् ॥ ७४ ॥**

मास्मिन् शरीरके कामोपकरणत्वारोपेणालीकमण्डनादिपरिपोषणं[1] कृथाः । नैवैतद् यथोपलभ्यमानं व्यामोहहेतुसमुदायात्मकं, किं तर्हि, तस्याविभक्तस्य ब्रह्मणः संसारग्रहणायावच्छेदकम् । षोढा षट्प्रकारमवस्थितं पृथिव्यादीन्यदृष्टं चेत्येवं षोढा षड्विकारभूतं च पूयशोणितादिषट्त्वचः प्रच्छाद्य धारयन्ति यस्मात्, तस्मादत्राग्रहो न कार्य इति हिशब्दस्यार्थः । किञ्च — षडङ्गानि शिरो बाहू शरीरकाण्डमूरू चेति । तथाशब्दः प्रकारार्थः, तथाभूतं कुणपात्मकमिति यावत् । ऋज्वन्यत् ॥ ७४ ॥

इदानीं षष्ट्यधिकं शतत्रयमस्थ्नामुपपादयति —

**स्थालैः सह चतुःषष्टिर्दन्ता वै विंशतिर्नखाः ।**
**पाणिपादशलाकाश्च तासां स्थानचतुष्टयम् ॥ ७५ ॥**

स्थालानि दन्तबन्धनान्यस्थीनि द्वात्रिंशद् दन्ताश्च एवं चतुःषष्टिः । नखविंशत्या पाणिपादशलाकाविंशत्या च सह पाण्यादिस्थानचतुष्टयेन चाष्टोत्तरशतम् । पाण्यादिशलाका अङ्गुलीमूलान्यस्थीनि तानि यस्मिन् प्रतिष्ठितानि तत् स्थानम् । स्पष्टमन्यत् ॥ ७५ ॥

तथा —

**षष्ट्यङ्गुलीनां द्वे पाष्ण्योर्गुल्फेषु तु चतुष्टयम् ।**
**चत्वार्यरत्न्योरस्थीनि जङ्घयोस्तावदेव तु ॥ ७६ ॥**

चत्वारीत्यर्थः । पाण्योः पृथग्वचनादत्रारत्निशब्दस्तद्व्यतिरेकेण द्रष्टव्यः । एवं पूर्वैः सहाशीतिशतं द्वे च ॥ ७६ ॥

**द्वे द्वे जानुकपालोरुफलकांससमुद्भवे ।**
**अक्षः स्थालूषके श्रोणिफलके चैव निर्दिशेत् ॥ ७७ ॥**

---

१. 'प'. क. पाठः.

एकैकस्मिन् जानुनि कपालद्वयं तथैकस्मिन्नूरौ फलकाद्वयमंसयोरेकैकमक्षादीनि चैव निर्दिशेत् । द्वे द्वे इत्येतानि संकलितानि षोडश पूर्वैः सह द्व्यूनं शतद्वयम् । अक्षः कक्ष्यास्थि । स्थालूषके तद्बन्धने । स्पष्टमन्यत् ॥ ७७ ॥

**भगास्थ्येकं तथा पृष्ठे चत्वारिंशच्च पञ्च च ।**
**ग्रीवा पञ्चदशास्थीनि जत्र्वेक्यं हि तथा हनुः ॥ ७८ ॥**

एतया त्रिषष्ट्या सहैकषष्ट्यधिकं शतद्वयम् । बाह्वंसयोः सन्धिर्जत्रुः । प्रसिद्धमन्यत् ॥ ७८ ॥

**तन्मूले द्वे ललाटास्थि गण्डनासाघनास्थिका ।**
**पार्श्वकाः स्थालकैः सार्धमर्बुदैश्च द्विसप्ततिः ॥ ७९ ॥**

तन्मूले द्वे ललाटास्थ्येकं गण्डनासाप्रतिबन्धकमेवास्थि गण्डनासाघनास्थिकेत्युक्तम् । एतानि चत्वारि द्विसप्तत्या सह षट्सप्ततिः ॥ ७९ ॥

**द्वौ शङ्खकौ कपालानि चत्वारि शिरसस्तथा ।**
**उरः सप्तदशास्थीनि पुरुषस्यास्थिसंग्रहः ॥ ८० ॥**

पूर्वसङ्कलने यदुक्तं 'सषष्टिं वै शतत्रयमि'ति तत् पूर्णं भवति ॥८०॥

एषामेव पृथिव्याद्याकाशान्तानां शरीरारम्भकाणां महाभूतानां गुणाः—

**गन्धरूपरसस्पर्शशब्दास्तु विषयाः स्मृताः ।**

एषामेव च ग्राहकाणि —

**नासिका लोचने जिह्वा त्वक् श्रोत्रं चेन्द्रियाणि तु ॥८१॥**

शारीरप्रक्रमाद् बुद्धीन्द्रियाधिष्ठानेष्वयमौपचारिकस्तच्छब्दः श्रोत्रशब्दश्च कर्णवचनः तुशब्दसामर्थ्यात् । ऋज्वन्यत् ॥ ८१ ॥

इमानि तु —

**हस्तौ पायुरुपस्थं च मुखं पादौ च पञ्चमम् ।**
**कर्मेन्द्रियाणि जानीयान्मनश्चैवोभयात्मकम् ॥ ८२ ॥**

मुखग्रहणं ताल्वादिवागधिष्ठानाभिप्रायम् । पञ्चमवचनं पाण्यादाव-भेदज्ञापनार्थम् । प्रसिद्धमन्यत् ॥ ८२ ॥

किञ्च —

नाभिरोजो गुदं शुक्रं शोणितं शङ्खकौ तथा ।
मूर्धा च हृदयं कण्ठः प्राणस्यायतनानि तु ॥ ८३ ॥

जीवनहेतोः प्राणस्यायुषो नाभ्यादीन्यायतनानि । आशयशुद्धावेषां परिज्ञानोपयोगिता । एवमुत्तरत्रापि योज्यम् । प्रवृत्तरुधिराद्यारम्भोऽन्नरस ओजः । स्पष्टमन्यत् ॥ ८३ ॥

कोष्ठसंबन्धितया —

वपा वपावहननं नाभिः क्लोम यकृत् प्लिहा ।
क्षुद्रान्त्रं वृक्कौ वस्तिः पुरीषाधानमेव च ॥ ८४ ॥
आमाशयोऽथ हृदयं स्थूलान्त्रं गुद एव च ।
उदरं च गुदः कोष्ठयो विस्तारोऽयमुदाहृतः ॥ ८५ ॥

वपावहननं वपान्त्रबन्धनम् । क्लोमयकृदादीनि त्वभिधानकोशान्मांसविक्रयिभ्यो भिषक्छास्त्राद्वावगन्तव्यानि । यथाह —

"उशन्ति तिलकं क्लोम तालखण्डं यकृत् तथा"

इति । तथा

"पक्वाशयादधो नाभेरूर्ध्वं चामाशयः स्मृतः"

इत्यादि ॥ ८४, ८५ ॥

अविभक्तेऽप्यवयवशो विभज्यमाने —

कनीनिकेऽक्षिणी कूटे शष्कुली कर्णपुत्रकौ ।
गण्डौ शङ्खौ भ्रुवौ दन्तावेष्टावोष्ठौ ककुन्दरौ ॥ ८६ ॥
वङ्क्षणौ वृषणौ वृक्कौ श्लेष्मसंघातिके स्तनौ ।
उपजिह्विका स्फिजौ बाहू जङ्घे चोरू सपिण्डके ॥ ८७ ॥

**तालूदरं वस्तिशीर्षं चिबुकं गलगण्डिका।**
**अवटुश्चैवमेतानि स्थानान्यत्र शरीरके॥ ८८॥**

कनीनिके अक्षितारके। अवशिष्टे त्वक्षिणी। तच्छादने चर्मणी कूटे। कर्णशष्कुली स्पष्टे। तच्छिद्रे कर्णपुत्रकौ। दन्तावेष्टौ दन्तानामावेष्टनानि। ककुन्दरौ नितम्बकूपकौ। ऊरुसन्धिर्वङ्क्षणः। वृषणयोरुपरि वृक्कौ। जिह्वामूले उपजिह्विका। अभितो गुदं मांसपिण्डौ स्फिजौ। गुदस्यान्तर्मूत्राधानं वस्तिः। प्रसिद्धमन्यत्॥ ८६—८८॥

अस्मिन्नेव शरीरके—

**अक्षि वर्त्मचतुष्कं च पद्धस्तहृदयानि च।**
**नवच्छिद्राणि तान्येव प्राणस्यायतनानि च॥ ८९॥**

वर्त्मचतुष्कमवबोधकमिन्द्रियचतुष्टयं श्रोत्रघ्राणरसस्पर्शानीत्यर्थः। एतान्यक्ष्यादीनि पञ्च बुद्धीन्द्रियाणि। पाणिपादौ कर्मेन्द्रियार्थौ। चशब्दोऽवशिष्टानां ग्राहकः। हृदयं मनः। यान्येतान्येकादशेन्द्रियाणि तान्येव पाण्यादिवर्जं नवच्छिद्राणि च। एतानि प्राणस्य प्राधान्येनायतनानि। शिरसि सप्त पायुरुपस्थं चेत्येवं नवच्छिद्राणि॥ ८९॥

किञ्च—

**सिराशतानि सप्तैव नव स्नायुशतानि च।**
**धमनीनां शते द्वे तु पञ्च पेशीशतानि च॥ ९०॥**

रुधिरस्राविच्छिद्राणि सिरा। स्नायु प्रसिद्धम्। वायुग्राहिण्यः सिरा एव धमन्यः, यासां पूरणे स्थूलता रेचने कृशता। मेदोवाहिन्यः सिरा एव पेश्यः। भिषक्छास्त्रोपयोगित्वेन स्थूलपरिमाणमेतत्॥ ९०॥

वायुविजयार्थं तु सूक्ष्मपरिमाणालोचनायेदानीमाह—

**एकोनत्रिंशतं लक्षास्तथा नवशतानि च।**
**षट्पञ्चाशच्च निर्दिष्टाः सिरा धमनिसंज्ञकाः॥ ९१॥**

निगदोक्तः श्लोकः॥ ९१॥

योगशास्त्राभिप्रायचतुरैः शरीरतत्त्वबुभुत्सुभिः —

**त्रयो लक्षास्तु विज्ञेयाः केशश्मश्रु मनीषिभिः ।**

रोमभेदसंख्ययेति शेषः ।

किञ्च —

**अष्टोत्तरं मर्मशतं द्वे तु सन्धी शते तथा ॥ ९२ ॥**

विज्ञेये इत्यनुषङ्गः । तथाशब्दः शास्त्रान्तरोक्तकेशादिपरिमाणविकल्पद्योतनार्थः सर्वस्मिन् संख्याप्रकरणे व्याख्येयः ॥ ९२ ॥

शास्त्रान्तरोक्तपरिमाणवैकल्पिकत्वेनैव च —

**रोम्णां कोट्यस्तु पञ्चाशत् तथा कोटिचतुष्टयम् ।**
**सप्तषष्टिस्तथा लक्षाः सार्धाः स्वेदायनैः सह ॥ ९३ ॥**

नन्वेतत् केशसंख्यादिपरिमाणं बाधकानुपलम्भमात्रेण यदृच्छयाभिधानात् परस्परव्याघाताच्च धूर्तनिखातपृथिवीमध्यलक्षणार्थकीलादितुल्यमिवोपलक्ष्यते । सत्यमेवम् । शरीरनिन्दापरत्वात् स्मृतेः । अतिशयपुण्यकारिभिश्च पुराणैर्ब्रह्मविद्भिरन्वयव्यतिरेकाभ्यामपि संभाव्यमानत्वाददोषः ॥ ९३ ॥

एतदेव स्पष्टयति —

**वायवीयैर्विगण्यन्ते विभक्ताः परमाणवः ।**
**यद्यन्ये को नु वेदैषां भावानां चैव संस्थितिम् ॥ ९४ ॥**

सनत्कुमारादयो वायुशिष्या वायवीयाः, तैस्तावद् येऽस्माभिरुक्ताः संख्याविशेषास्ते विगण्यन्ते । यदि त्वेतेभ्योऽपि परमाणवः परमसूक्ष्मा अन्ये संख्याविशेषा भवन्ति, भवन्तु, न दोषो यस्मात्, तस्मात्, को नु वेदैषां परमार्थतः परिमाणम् । श्रद्धामात्रेण यथावगमं किञ्चिदभिधीयत इत्यभिप्रायः । किञ्च भावानां च प्राणिनामनेकप्रकारां विचित्रां संस्थितिं को नु वेदेति योज्यम् ॥ ९४ ॥

---

१. 'क' क. पाठः.

आगमानुसारेणैव च —

रसस्य नव विज्ञेया जलस्याञ्जलयो दश ।
सप्त चैव पुरीषस्य रक्तस्याष्टौ प्रकीर्तिताः ॥ ९५ ॥

स्वस्थस्य चैतन्निष्पन्नस्य धातुपरिमाणं विज्ञेयम् । यत्तु कैश्चिद्धेत्व-नुसारादुक्त'मनियतं मूत्रपुरीषमि'ति, तदिहापरिनिष्पन्नजातमात्रविषयत्वा-दचोद्यम् ॥ ९५ ॥

अञ्जलिनैव च —

षट् श्लेष्मा पञ्च पित्तं तु चत्वारो मूत्रमेव च ।
वसा त्रयो द्वौ तु मेदो मज्जैकार्धं च मस्तके ॥९६॥

एकोऽञ्जलिर्मज्जा मस्तके चार्धम्, एवमध्यर्धोऽञ्जलिः ॥ ९६ ॥

श्लेष्मौजसस्तावदेव रेतसस्तावदेव तु ।
इत्येतदस्थिरं वर्ष्म यस्य मोक्षाय कृत्यसौ ॥ ९७ ॥

ओजो व्याख्यातम् । तदेव श्लेष्मणः कारणभूतं श्लेष्मौजः, तस्य देवाध्यर्धोऽञ्जलिरित्यर्थः । एवं रेतसोऽध्यर्ध एव । एवं यद् व्याख्यात-मास्थरम् अनित्यं विनाशि महाघोरं दुर्लक्ष्यं संसारनिमित्तं वर्ष्म शरीरं यस्य क्षेत्रिणः पुण्यकृतः सञ्जातवैराग्यस्योच्छिन्नाभिलाषस्य मोक्षार्थं चतु-र्थाश्रमप्रतिपत्त्यर्थं स्यात्, कृत्यसौ कृतकृत्य इत्यर्थः ॥ ९७ ॥

कः पुनरत्र मोक्षप्रकारो येनेह पुनर्जन्म न स्याद्, उच्यते—

द्विसप्ततिसहस्राणि हृदयादभिनिःसृताः ।
हिता नाम हि ता नाड्यस्तासां मध्ये शशिप्रभम् ॥९८॥
मण्डलं तस्य मध्यस्थ आत्मा दीप इवाचलः ।
मध्ये यस्तं विदित्वा तु पुनराजायते न तु ॥ ९९ ॥

संसारापनोदनक्षमत्वाद्धिता इत्यन्वर्थसंज्ञैवेयमित्यवगन्तव्यम् । हिश-ब्दो हेत्वर्थः । यस्मात् प्राणात्मनः सञ्चरणार्थत्वेनोत्कर्षनिमित्तं, तस्माद्धिता

---

१. 'स', २. 'द्वा' क. पाठः.

नामेति । तासां मध्ये शशिप्रभं मण्डलं हृदयान्तर्वर्ति ध्यानैकगम्यं यत्[१], तस्य मध्यस्थ आत्मा दीपे इवेत्यादिना दृष्टान्तेन स्पष्टीकृतः । योऽयं मध्ये हृन्मण्डलस्योपलभ्यस्तं विदित्वा तु संसारचक्रे न पुनराजायते मुच्यत एवेत्यर्थः । ननु चात्मनः सर्वगतत्वान्नियतदेशाभिधानमयुक्तम् । मैवम् । उपलब्धिमार्गोपदेशोऽयं, नात्मनः स्वरूपोपदेशः । अतएव च पुनर्विशेषाभिधानं मध्ये यस्तं विदित्वेति । प्रदीपदृष्टान्तस्त्वनन्यप्रकाश्यत्वाद् व्यापित्वाच्च । यथैवं[२] ह्यविभक्तस्यापि प्रदीपतेजसः प्रचिततरत्वेनैकत्रोपलम्भादिहैवायमिति व्यवच्छेदाभिधा[३]नं, तथैवात्मव्यवच्छेदाभिमानोऽपीत्यभिप्रायः ॥ ९८,९९ ॥

अस्यैव तु सम्यग्विवेकार्थं —

**ज्ञेयमारण्यकमहं यदादित्यादवाप्तवान् ।**
**योगशास्त्रं च मत्प्रोक्तं ज्ञेयं योगमभीप्सता ॥ १०० ॥**

अहं यदादित्यादित्यादिना बृहदारण्यकमिति ज्ञापयति । आरण्यकज्ञानोपदेशाच्च वेदादेवायमर्थोऽवगन्तव्यः नान्यत इत्यवगम्यते । वेदादपि चाचार्यतो ब्रह्मचर्याधिगतादित्यहमादित्यादित्यादिनो[४] द्योतितम् । नचैवं सति स्मृत्यानर्थक्यम् । किं तर्हि, वेदार्थोपकरणतया । योगसिद्धिमाभिमुख्येन कर्तुमिच्छता योगशास्त्रमपि मत्प्रोक्तं ज्ञेयमेवेत्यभिप्रायः । मत्प्रोक्तं वेदार्था[५]नुगुणं, नतु तद्विपरीतं बुद्ध्याद्युक्तमित्यभि[६]प्रायः । तथाचोक्तं स्वयम्भुवा—

"आर्षं धर्म(प्र)वचनं वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥"

इति । ऋषयो ब्रह्मविदस्तेषामिदमित्यार्षं ब्रह्मस्वरूपप्रतिपत्त्यर्थम् । स्पष्टमन्यत् ॥ १०० ॥

तदिदानीं वेदानुगुण[७]ध्यानप्रकारं प्रपञ्चयति —

**अनन्यविषयं कृत्वा मनोबुद्धिस्मृतीन्द्रियम् ।**
**ध्येय आत्मा स्थितो योऽसौ हृदये दीपवत् प्रभुः ॥ १०१ ॥**

---

१. 'व वि', २. 'प्चुरतं', ३. 'भानः त' ग. पाठः. ४. नोद्द्योति' च. पाठः, ५. 'दानु', ६. 'र्थः । त', ७. 'ण' ग. पाठः,

नास्मादन्यो विद्यत इत्यनन्य आत्मा तद्विषयं मनोबुद्धिस्मृतीन्द्रियं कृत्वा अन्यविषयतायाा व्यावर्त्येत्यर्थः । क्व पुनः शरीरदेशे वर्तमानस्य मनोबुद्ध्यादेरनन्यविषयता स्यात्, तदाह — हृदय इति । यदा हि बाह्यविषयोपरमेणेन्द्रियप्रवृत्तयो हृदि नियम्यन्ते, तदा मनोऽपि तदनुविधानात् स्वदेशवर्त्यपि स्वविषयात् सुखादेरपवृत्तमकल्पकं भवति । तदधीनत्वाच्च स्मृतिबुद्ध्योरात्मन्यवस्थानात्मनो बुद्धिस्मृतीन्द्रियैस्यात्मविषयत्वसिद्धिः । अतो हृदये संनिरुध्येन्द्रियग्राममात्मविषयतया प्रदीपवदभिन्नोऽपि भेदावभासी व्यापितया प्रभुरव्ययः परमात्मा ध्येय इत्यादि योज्यम् ॥ १०१ ॥

नन्वेतद् दुर्वारत्वादिन्द्रियग्रामस्य दुःशकमिवोपलक्ष्यते, सत्यं दुश्शकं, न त्वशक्यमेव । यतः पश्य —

**यथावधानेन पुमान् साम गायत्यविध्ययम् ।**
**सावधानस्तथाभ्यासात् परं ब्रह्माधिगच्छति ॥ १०२ ॥**

किमत्राशक्यं, दृष्टं हि प्रणिहितमनसां सामगानाम्रक्तो विवेकेन दुर्लक्ष्यामपि रथन्तरादिगीतिमृगन्तरारोपितामिदमत्र सामेत्येवमविभाव्यं यमविनष्टं सामगानं यथैव च पुमानेव प्रसक्तबाह्यविषयमना अप्यविध्ययं सावधानः साम गायति, एवमेव ध्यानाभ्यासात् परमपि ब्रह्माधिगच्छत्येव । अतोऽत्र यत्नवता भाव्यं नाशक्यमेवैतदिति पराभङ्गः कार्यः । तथा चोक्तम्—

"उत्सेकं जलधेर्दृष्ट्वा तृणाग्रेणैकबिन्दुना ।
अशक्यमिति मन्तव्यं न किञ्चित् कृतबुद्धिना ॥"

इति ॥ १०२ ॥

अतएवच्चेन्द्रियनिरोधकत्वेन परब्रह्मप्राप्तिहेतोर्योगस्योपायभूतं गानमिति मन्यमाना गीतिवेदविदो नारदादयः स्मरन्ति —

**अपरान्तकमुल्लोप्यं मद्रकं प्रकरीं तथा ।**
**औवेणकं सरोबिन्दुमुत्तरं गीतिकानि तु ॥ १०३ ॥**

---

१. 'त', २. 'पृ', ३. 'प्र', ४. 'यविषयस्या', ५. 'म्य', ६. 'पि भवितव्यं य', ७. 'नां', ८. 'बुद्ध्वा तु' क. पाठः.

**ऋग् गाथा पाणिका दक्षविहिता ब्रह्मगीतिका ।**
**गेयमेतत् तदभ्यासकारणाच्चोक्तसंज्ञकम् ॥ १०४ ॥**

इमान्यपरान्तकादीनि प्रायेण वस्तुमात्रापादभागात्मकानि स्वविषयविशिष्टानि सप्त गीतिकानि गानशास्त्रादेवावसेयानि । तद्यथा —

"अथ वस्तूनि षद् सप्त पञ्च वाप्यपरान्तकम् ।"

इत्यादि, तथा —

"आदावुल्लोप्यकस्याथ मात्राभिः पतनैर्युता ।"

इति । एवमादि महत् तन्त्रं ग्रन्थगौरवप्रसङ्गादत्र न प्रपञ्च्यते । तथा वस्तुमात्रापादभागादिविवेकोऽपि तत एव मृग्यः । यथा — 'स्वयं वस्तुषण्मात्रा' इत्यादि । ऋग्गाथा इत्यत्रापि च विशिष्टा एव ह्यृचो दिव्यवीणया ब्रह्मणा गीताः । तथा गाथा काश्यपप्रजापतिगीता । पाणिका दक्षविहिता दक्षप्रजापतिगीतेत्यर्थः । ब्रह्मस्तुत्यर्था गीतिका ब्रह्मगीतिका । सर्वमेतच्चोक्तसंज्ञकं नारदाद्युक्तलक्षणं योगमार्गोपयोगित्वाद् गेयम् । अन्यपरत्वाच्चोपदेशस्य नात्यभिनिवेशः कार्यः । यद्वा नारदादिस्मरणादिहापि च प्रसङ्गाभिधानाद् वेदमूलत्वमेवानुमेयमित्यनवद्यम् ॥ १०३, १०४ ॥

भूयश्च नारदाद्यभिप्रायेणैवाह —

**वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ।**
**तालज्ञश्चाप्रयासेन योगमार्गं निगच्छति ॥ १०५ ॥**

श्रुतिर्ध्वन्यात्मिका द्वाविंशतिप्रकारा स्वरपरिमाणनियामिका विज्ञेया । जातिस्त्वष्टादशप्रकारा षड्जाद्या । तालः कालपातात्मको मानविशेषः । स्पष्टमन्यत् ॥ १०५ ॥

किञ्च —

**गीतिज्ञो यदि योगेन नाप्नोति परमं पदम् ।**

---

१. 'त्यादि', २. 'ता ब्र', ३. 'गोप' ग ङ. पाठः. ४. 'णानुसारादिना च प्र' ङ. पाठः.

तथापि तु —

**रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते ॥ १०६ ॥**

अनेन च गानाधिदेवता रुद्र इत्येतद् ज्ञापितम् ॥ १०६ ॥

प्रासङ्गिकमभिधायेदानीमिदमेवात्मतत्त्वमतिसौहृदात् कृत्स्नं जीवलोकमनुजिघृक्षुराचार्य द्रढयितुं शास्त्रा[1]रम्भप्रयोजकानेव मुनीन् प्रष्टृत्वेनोपन्यस्यति स्म —

**अनादिरात्मा कथितस्तस्यादिश्च शरीरकम् ।**
**आत्मनश्च जगत् सर्वं जगतश्चात्मसम्भवः ॥ १०७ ॥**

"निमित्तमक्षरं कर्ते"त्यादौ कथित एवेति शेषः ॥ १०७ ॥

एवञ्चानुपपन्ने जगतश्चात्मनश्च कार्यकारणभावे सति —

**कथमेतद् विमुह्यामः सदेवासुरमानवम् ।**
**जगदुत्पन्नमात्मा च कथन्न्वास्मिन् वदस्व नः ॥ १०८ ॥**

कथन्नु खल्वयं विरुद्धः कार्यकारणभावः । अस्मिन् विरोधे परिहाराय नः अस्माकं वदस्व कथयेत्यर्थः ॥ १०८ ॥

इदानीं योगीन्द्रस्तेषामुत्तरमाह —

**मोहजालमपास्येदं पुरुषो दृश्यते हि यः ।**
**सहस्रकरपन्नेत्रः सूर्यवर्चाः सहस्रशः ॥ १०९ ॥**
**स आत्मा चैव यज्ञश्च विश्वरूपः प्रजापतिः ।**
**विराट् च सोमरूपेण यज्ञत्वमुपगच्छति ॥ ११० ॥**

ग्रन्थरूपतया प्रश्नोत्तराभिधानं कृतव्याख्यानमेव । मास्मिन् व्यामोहं कृथाः । कुतार्किकोक्तालीककुचोद्यानुसारिमोहजालमपनीयाखिलप्रपञ्चरूपातिरिक्तो वक्ष्यमाणयुक्त्यनुग्रहात् प्रत्यक्षेणैव प्रत्यगात्मन्यपरोक्षरूपतया निरस्तद्वितयप्रतिभासः पुरुषो यो दृश्यते अनुभूयते । कथंलक्षणः, सहस्रकरपन्नेत्र इत्यादिलक्षणः । स एवात्मा यज्ञश्च, यज्ञशब्दश्च तत्कारणपृथिव्यादिमहाभूतवचनः, पृथिव्यादीन्यपि स एवेत्यर्थः । कथं पुनः स एवात्मा यज्ञश्च,

---

१. 'स्त्रप्र' क. ग. पाठः.

यतो विश्वरूपः प्रजापतिश्च सः। सर्वाणि भूतान्यस्यैवाविभक्तस्यात्मनो रूपाणि यस्मात्, तस्माद् विश्वरूपः। अत एव चोक्तं सहस्रकरचरण इत्यादि। सहस्रशब्दश्च बह्वर्थो न संख्यार्थः, अनन्तजातिरूपसम्बन्धेनाभिन्नोऽपि घटाकाशादिवद् भिद्यमानः सहस्रशो दृश्यते। सूर्यवर्चाः स्वयंप्रकाश इत्यर्थः। स्वयं च भेदेन प्रजासर्जनात् प्रजापतिः विराट् च। अन्नं स एव भूत्वा सोमादिरूपेण यज्ञत्वं यज्ञसाधनत्वमुपगच्छति प्राप्नोतीत्यर्थः ॥ १०९, ११० ॥

ततश्च —

**यो द्रव्यदेवतात्यागसम्भूतो रस उत्तमः।**
**देवान् स सन्तर्प्य रसो यजमानं फलेन तु ॥ १११ ॥**

**संयोज्य वायुना सोमं नीयते रश्मिभिस्ततः।**
**ऋग्यजुःसामविहितं सौरं धामोपनीयते ॥ ११२ ॥**

योऽयमाहुत्यात्मको द्रव्यदेवतात्यागसम्भूतो याज्ञः सोमादिद्रव्यस्य दर्शनानुविधायी साधारणात्मको जगत्कारणभूतः सूक्ष्म उत्तमो रसः स देवान् सम्यक् तर्पयित्वा विशेषात्मना च यजमानं फलेनानुष्ठितनियोगतया संयोज्य ततः साधारणात्मना "समिष्टयजुषा स्वाहा वातेधा" इत्येवं विद्यादर्शनाद् वाते प्रक्षिप्तः स वातेन सोमं[3] सोममण्डलं नीयते। ततश्च सौरैरेव रश्मिभिर्दर्शनानुग्रहाद् ऋगादिमन्त्रार्थवादादिप्रतिपादितं सौरं स्थानमुपनीयत इत्यादि। तदेतद्धचाप्युक्तं "यमक्षितमाक्षितयः पिबन्ति" इत्यादि ॥ १११, ११२ ॥

यश्चासौ याज्ञो रसः सौरं धाम प्राप्तो जगत्कारणत्वेन सम्भृतः —

**तन्मण्डलमसौ सूर्यः सृजत्यमृतमुत्तमम्।**
**यज्जन्म सर्वभूतानामशनानशनात्मनाम् ॥ ११३ ॥**

---

१. 'स्यैकस्यैवात्म' ङ. पाठः. २. 'ज्ञो रसः सा' ३. 'ममण्ड' ग. पाठः.

(योऽसौ याज्ञो रसः?)तन्मण्डलमसौ परमात्मा सूर्यः । तदुक्तं—"सूर्यआत्मा जगतस्तस्थुषश्चे"ति । असौ सूर्यस्तदुत्तममसृतमुदकं जगत्कारणभूतं सृजति मुञ्चतीत्यर्थः । तदेवोदकं विशिनष्टि—यज्जन्म सर्वभूतानामित्यादि । अशनानशनात्मनां स्थाणुजङ्गमानामित्यर्थः ॥ ११३ ॥

योऽसावुदकभावेन याज्ञो रस इह प्राप्तः फलभूतो विराट्त्वमन्नरूपतामापन्नः—

**तस्मादन्नात् पुनर्यज्ञः पुनरन्नं पुनः क्रतुः ।**
**एवमेतदनाद्यन्तं चक्रं संपरिवर्तते ॥ ११४ ॥**

तस्मादन्नात्पूर्वेणैव मार्गेण पुनः साधारणात्मना यज्ञो निष्पद्यते तस्माच्च यज्ञात् तेनैव वाय्वादिना मार्गेण पुनर्विराट् चान्नं, ततोऽपिचान्नात् तथैव पुनः क्रतुर्यज्ञः ततश्च पुनरप्यन्नमित्येवमेतदनादिनिधनं विश्वरूपस्य ब्रह्मणः संसारबीजं चक्रक्रमात् परिवर्तते । ततश्चान्योन्यकार्यकारणत्वेऽप्यविरोधः ॥ ११४ ॥

इदं चानादिनिधनं चक्रं परिवर्तमानमालोच्यास्माभिरुक्तः—

**अनादिरात्मा संभूतिर्विद्यते नान्तरात्मनः ।**
**समवायी तु पुरुषो मोहेच्छाद्वेषकर्मज. ॥ ११५ ॥**

यद्यनादिरात्मा कथं जायते म्रियत इति व्यवहारः, उक्तं—"शरीरग्रहणात् स जात इति कीर्त्यते" इति । परमार्थतस्त्वनादिरात्मा नास्यान्तरा सम्भूतिर्जन्म विद्यते इत्यभिप्रायः । शरीरग्रहणमेवाकलङ्कस्य ब्रह्मणः कस्मादिति चेद्, नैवाक्षरस्य परमात्मनः शरीरसम्बन्धः, शरीरासंसृष्ट एव हि सः । अयं त्वन्य एव ततोऽवच्छिन्नः शरीरसमवायी पुरुषः अविद्याव्यामोहादिच्छाद्वेषाभ्यां साधारणविशेषात्मकत्वेन च कर्मणा संसृष्टो जन्मव्यपदेशभागित्यवसेयम् ॥ ११५ ॥

अतश्चायं परावरात्मको मूर्तामूर्तरूपः स एव परमात्मा—

**सहस्रात्मा मया यो व आदिदेव उदाहृतः ।**
**मुखबाहूरुपज्जातास्तस्य वर्णा यथाक्रमम् ॥ ११६ ॥**

मुखेनाध्ययनभोजनादिकार्यसंयोगाच्छ्रैष्ठयेन च प्राथम्याद् ब्राह्मणस्य मुखजत्वम् एवं रक्षणादिबाहुकार्यसम्बन्धाद् बाहुजत्वमित्यादि ब्रह्मणः पारमार्थिकमुखाद्यभावात् प्रपञ्चनीयम्॥ ११६॥

एवमेव प्रतिष्ठादिपदादिकार्ययोगात्—

**पृथिवी पादतस्तस्य शिरसो द्यौरजायत।**
**नस्तः प्राणा दिशः श्रोत्रात् त्वचो वायुर्मुखाच्छिखी॥**

मानसेन दर्शनेन चाभिव्यङ्ग्यत्वात्—

**मनसश्चन्द्रमा जातश्चक्षुषश्च दिवाकरः।**
**जघनादन्तरिक्षं च जगच्च सचराचरम्॥ ११८॥**

जघनशब्दो नाभ्याद्यर्थः। सचराचरं जगत् तस्मादेव ब्रह्मणो जातमित्यादि योज्यम्। ऋज्वन्यत्॥ ११८॥

एवं परमात्मस्वरूपेऽभिहिते मुनयश्चोदयन्ति—

**यद्येवं स कथं ब्रह्मन् पापयोनिषु जायते।**
**ईश्वरः स कथं भावैरनिष्टैः सम्प्रयुज्यते॥ ११९॥**
**करणैरन्वितस्यापि पूर्वज्ञानं कथञ्च न।**
**वेत्ति सर्वगतां कस्मात्सर्वगोऽपि न वेदनाम्॥१२०॥**

यद्येवमनादिनिधनोऽक्षरः परमात्मा ततो ब्रह्मन्! पृच्छामो भवन्तं कथं पापयोनिषु पराधीनवज्जन्म प्रतिपद्यते। अथ मतं रागाद्यनिष्टसम्प्रयोगादिति तदपि पर्यनुयोगभागेव ईश्वरोऽप्यपराधीनः स कथं भावैरनिष्टैः सम्प्रयुज्यत इति। अथायमभिप्रायः संसार्यात्मतया पूर्वज्ञाननिरोधादिति। तदप्यसत्। कथं तस्याकलङ्कस्य संसार्यात्मता, कथं च तदात्मकत्वेऽपि शक्तिरूपैर्दृष्टयाद्यैरनपायिभिः करणैरन्वितस्यापि पूर्वज्ञानं नास्ति। संसार्यात्मतया विच्छेदादेवेति चेत्, अज्ञत्वप्रसङ्ग एव स्यात्। सर्वगतपरमात्मस्वरूपानपायाद् ज्ञानोत्पत्तिरिति चेत्, एवं सति सर्वगोऽपि सन् स देवः कस्मात् सर्वशरीरान्तर्गतां वेदनां सुखादिसंविदं न वेत्ति न जानातीत्यर्थः॥ १२०॥

१. 'त्मत्वे', २. 'ज्ञात् स', ३. 'दैव सर्वगतः श' ग. पाठः.

एवं मुनिभिः परिचोदिते भगवतोत्तरमुच्यते—

**अन्त्यपक्षिस्थावरतां मनोवाक्कायकर्मजैः ।**
**दोषैः प्रयाति जीवोऽयं भवन् जातिशतेषु च ॥ १२१ ॥**

यदुक्तं पापयोनिषु कथं जायत इति तत्रेदमुत्तरं मनोवाक्कायकर्मजैर्दोषैरन्त्यपक्षिस्थावरतां जातिभेदेषु च शतशो भवन्नुत्पद्यमानो यातीति। एतदेव तु प्रथमतरं वाच्यमासीत्, कथं ब्रह्मणः संसार्यात्मतैवेति। तत्तु साधारणविशेषात्मकत्वेनारम्भकस्य यज्ञादिचक्रस्यानादिनिधनत्वाभिधानेनैव परिहृतप्रायत्वात् कूपपतितस्येवोद्धारणप्रकारार्थिनः पतनप्रकारान्वेषणवदनुपयोगित्वान्न परामृश्यते ॥ १२१ ॥

किञ्च—

**अनन्ता हि यथा भावाः शरीरेषु शरीरिणाम् ।**
**रूपाण्यपि तथैवेह सर्वयोनिषु देहिनाम् ॥ १२२ ॥**

वाक्कायकर्मणोऽपि हि कारणभूता मानसा एव भावाः । तथाचाम्नायोऽपि 'अथ खलु क्रतुमयोऽयं पुरुष' इति । ते चानन्ताः शरीरिणा संसार्यात्मनां शरीरेषु वर्तमानानां यथैवच कारणभूता अनन्ता भावाः, तथैवच कार्यभूतानि रूपाण्यपीह वर्तमानानां देहिनामपि । अतश्च परमात्मस्वरूपवदनन्तमानसभावसम्बन्धात् संसार्यात्मनामप्यनादित्वसिद्धिः ॥ १२२ ॥

यदि कर्मतो योन्यन्तरसम्बन्धः यस्यां तर्हि तिर्यगादियोनावनधिकारः ततो योन्यन्तरसम्बन्धो न प्राप्नोति, सत्यं, यद्यैहिकफलान्येव वैदिकानि कर्माणि स्युः, ततः स्यादप्येवम् । यदा तु खलु—

**विपाकः कर्मणां प्रेत्य केषांचिदिह जायते ।**
**इह चामुत्र चैकेषां**

तदैतदचोद्यमिति शेषः ।

किञ्च नैव हि तत्र कर्मफलोत्पादेऽधिकारज्ञानस्योपयोगः । किन्तर्हि—

**भावस्तत्र प्रयोजकः ॥ १२३ ॥**

१. 'तु वि' ग. पाठः.

भावमात्रेणापरिज्ञातमपि कर्म फलमुत्पादयत्येवेत्यभिप्रायः । प्रेत्य विपाकः स्वर्गादिफलानाम्, इहैव वृष्ट्यादेः, अनियतः पश्वादीनाम् । ऋज्वन्यत् ॥ १२३ ॥

तदिदानीं कर्मजं कार्यकारणभावं प्रपञ्चयति—

**परद्रव्याण्यभिध्यायंस्तथानिष्टानि चिन्तयन् ।**
**वितथाभिनिवेशी च जायतेऽन्त्यासु योनिषु ॥ १२४॥**

परद्रव्याभिध्यानादिभिर्मानसैर्दोषैरन्त्यासु चण्डालादियोनिषु जायत इति मन्तव्यम् ॥ १२४ ॥

स वाग्दोषैस्तु—

**पुरुषोऽनृतवादी च पिशुनश्चैव मानवः ।**
**असम्बन्धप्रलापी च मृगपक्षिषु जायते ॥ १२५ ॥**

पुनर्मानव इति पुरुषवचनात् पुरुषमात्राश्रयमेतदिति ज्ञापयति । मृगपक्षिवचनं चाशेषतिर्यग्जातिलक्षणार्थम् । ऋज्वन्यम् ॥ १२५ ॥

कायिकैस्तु कर्मदोषैः—

**अदत्तादाननिरतः परदारोपसेवकः ।**
**हिंसकश्चाविधानेन स्थावरेषूपजायते ॥ १२६ ॥**

सत्त्वगुणातिशययोगात् पुनः—

**आत्मज्ञः शौचवान् दान्तस्तपस्वी नियतेन्द्रियः ।**
**धर्मकृद् वेदविद्याभिः सात्त्विको देवयोनिषु ॥१२७॥**

आत्मज्ञः शौचादिनिष्ठो वेदविच्च यः स सात्त्विको देवयोनिषु याति कर्मणा देवत्वं प्राप्नोतीत्यर्थः ॥ १२७ ॥

अतिशयरजःसंबन्धात् तु—

**असत्कार्यरतोऽधीर आरम्भी विषयी च यः ।**
**स राजसो मनुष्येषु मृतो जन्म प्रपद्यते ॥ १२८ ॥**

---

१. 'णैवाप', २. 'षु यो' ग. पाठः.

सच्छब्दो नित्यवचनः नित्यं यत् कार्यमग्निहोत्रादि तत् सत् कार्यं ततोऽन्यदसत् कार्यं काम्यं, तत्प्रधानः अधीरश्चञ्चलचित्तः आरम्भी सान्दृष्टिकारम्भप्रधानः भोगादिकामविषयासक्तश्च यः स राजसो मनुष्यजात्याश्रयफलोपभोक्तृत्वान्मनुष्येषु जायते मृतो मर्त्यः अमृतत्वलक्षणदेवत्वानर्ह इत्यर्थः ॥ १२८ ॥

अपुण्यभूयस्त्वात्तु स्वभावत एव—

**निद्रालुः क्रूरकृल्लुब्धो नास्तिको याचकस्तथा ।**
**प्रमादवान् भिन्नवृत्तो भवेत् तिर्यक्षु तामसः ॥ १२९ ॥**

यदेकैकत्र सात्त्विकादौ स्वयंभुवा त्रैविध्यमुक्तं तदिहोदाहरणार्थतयोपन्यासान्न प्रपञ्चितम् ॥ १२९ ॥

एवञ्च मनोभावमूलत्वात् संसारस्थितेर्मानसैरेव—

**रजसा तमसा चैव समाविष्टो भ्रमन्निह ।**
**भावैरनिष्टैः संयुक्तः संसारं प्रतिपद्यते ॥ १३० ॥**

सत्त्वाल्पतया रजस्तमोभ्यां समाविष्टः पराधीनत्वादिहैव संसारे भ्रमन् भूयः संसारमेवानिष्टैर्मानसैर्भावैः संयुक्तः प्रतिपद्यते न विमुच्यत इत्यर्थः ॥ १३० ॥

रजस्तमोभ्यामभिभूतसत्त्वश्च सर्वज्ञत्वेऽपि विज्ञानात्मतया विच्छेदात्—

**मलिनो हि यथादर्शो रूपालोकस्य न क्षमः ।**
**तथाविपक्वकरण आत्मा ज्ञानस्य न क्षमः ॥ १३१ ॥**

सत्यपि ह्यालोकसामर्थ्ये मलोपघाताद् यथैवादर्शो रूपालोकनासमर्थः, तथैव रजस्तमोपघातादपक्वोऽपटुकरणो विज्ञानात्मा सम्यग् ज्ञानस्यासमर्थः । अतो यदुक्तं कथं करणवतोऽपि पूर्वज्ञानाभाव इति तत् परिहृतम् ॥ १३१ ॥

अतश्चानुच्छिन्नकरणशङ्कावपि—

**कट्वेर्वारौ यथा पक्वे मधुरः सन् रसोऽपि न ।**
**प्राप्यते**

१ 'त्ववत् का', २. 'कनसा', ३. 'प्य इति' ङ. पाठः.

इतिच्छेदः।

**आत्मन्यपि तथा नापक्वकरणे ज्ञता ॥ १३२॥**

उर्वारुश्चिर्भिटसदृशं फलम्। स्पष्टमन्यत् ॥ १३२ ॥

यदुक्त 'वेत्ति सर्वगतां कस्मात्सर्वगोऽपि न वेदनाम्' इति। तत् परिहर्तुमाह—

**सर्वाश्रयां निजे देहे देही विन्दति वेदनाम्।**
**योगी युक्तस्तु सर्वेषां यो नावाप्नोति वेदनाम् ॥ १३३ ॥**

भोगायतनत्वान्निज एव देहे यस्माद् विज्ञानोत्पादः तस्मात्सर्वगतोऽपि सर्वाश्रयाः संविदो न विभावयति। यदा तु योगी परिनिष्पन्नयोगज्ञानः स्यात् तदा युक्तः समाधिस्थो निज एव देहेऽवस्थितः स्पर्शयोगसामर्थ्यात् सर्वाश्रयां देहान्तरवर्तिनीमपि विज्ञानात्मान्तरेण भेदप्रत्ययमपनीयात्मव्यवस्थितो वेदनां संविदं वेत्ति उपलभत इत्यर्थः। तुशब्दस्य चोत्कृष्य नञा संबन्धः न त्ववाप्नोति वेदनामिति। एतदुक्तं भवति—उपलभत एव न त्ववाप्नोति विज्ञानफलं सुखादि नोपभुङ्क्ते इत्यर्थः। कथं पुनर्ज्ञातृत्वेनाभिन्नस्यापि सुखाद्यभोक्तृत्वं, कर्मसाध्यत्वात् फलोपभोगस्य भेदानुपातिनश्च कर्मणो विज्ञानात्माश्रयत्वादित्यविरोधः ॥ १३२ ॥

कथं पुनरेकस्यैव विभक्ताविभक्तत्वं तथैव युक्त्यागमाभ्यामुपलम्भनात्। तथाहि—

**आकाशमेकं हि यथा घटादिषु पृथग् भवेत्।**
**तथात्मैको ह्यनेकश्च जलाधारेष्विवांशुमान् ॥ १३४ ॥**

यथैव ह्येकत्वेऽप्याकाशं घटादिभिरवच्छिन्नविशेषमेकताप्रत्ययं भिदां च बिभर्ति न च भेदानुपातिधर्मसंकरः, तथा ब्रह्मणोऽपीत्यवसेयम्। तथा चाह—

"यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते।
न सर्वे संप्रयुज्यन्ते सुखं दुःखं तथात्मनः ॥"

इति। तथान्यैरपि—

"धूमपूर्णघटानां च यस्यैकस्यैव[1] रेचनम् ।
उत्पाद्य क्रियते तत्र जायते व्योम निर्मलम् ॥"

इति ॥ १३४ ॥

यदि तर्हि सवितुरिवाभिन्नस्यापि जलाधारादिवद् ब्रह्मणो भेदावभास न तर्हि भेदः प्रमाणवान् व्यामोहनिबन्धनत्वादित्यादिकामाशङ्कां निराकरोति —

**ब्रह्मखानिलतेजांसि जलं भूश्चेति धातवः ।**

परमार्थसत्या एवेति शेषः । यदुक्तं[2]—

"पञ्च धातून् स्वयं षष्ठानादत्ते युगपत् प्रभु"

इत्यत्र यथैते पञ्च धातवः परमार्थसत्याः ।

**इमे लोका एष चात्मा तस्माच्च सचराचरम् ॥ १३५ ॥**

लोकशब्दः शरीरवचनः लोकाः शरीराणीत्यर्थः । तस्माच्चात्मनोऽनन्यतयैव घटाद्याकाशवत् सचराचरं भेदव्यवहारानुपाति जगदित्यर्थः । कथं पुनरभिन्न एवात्मात्मनः शरीरादि कुर्यात्, उक्तं भावविशेषानुग्रहादिति ॥ १३५ ॥

किञ्च —

**मृद्दण्डचक्रसंयोगात् कुम्भकारो यथा घटम् ।**
**करोति तृणमृत्काष्ठैर्गृहं वा गृहकारकः ॥ १३६ ॥**
**हेममात्रमुपादाय रूपं वा हेमकारकः ।**
**निजलालासमायोगात्कोशं वा कोशकारकः ॥ १३७ ॥**
**करणान्येवमादाय तासु तास्विह योनिषु ।**

कार्यगम्यत्वात्सामग्रीनियमस्य तद्दर्शनानुसारिण्येव कल्पनेत्यभिप्रायः । यथा च घटगृहादौ सामग्रीवैचित्र्योपलम्भः, कोशकारादेस्तु कोशादिसर्जनं लालादिकरणवतः तत्सृष्टौ त्वात्मन एव कर्तृत्वकरणत्वे एवं ब्रह्मणोऽपि महाभूतादिजन्यकर्मादिकरणवतः शरीरादिसर्जनं करणादिसृष्टौ त्वात्मन एव कर्तृत्वकरणत्वे ।

---

१. 'स्यैवैकस्य रे' क. ङ. पाठः. २. 'त' ग. पाठः.

तद् दर्शयति—

**सृजत्यात्मानमात्मैव संभूय करणानि च ॥ १३८ ॥**

इति । संभूय करणानि च स्वयं कर्तृकरणभूत इत्यर्थः । ननु चान्योन्यव्याहत एवायं चेतनाचेतनत्वेनैकबहुत्वानुसारी परावररूपः परमार्थान्वेषणेनात्मप्रत्ययः । तथाहि, यदि तावद्युक्त्यागमानुसारादद्वयं ब्रह्म, ततो भेदव्यवहारो जलपात्रेष्विव सवितुरुपाधितो भ्रान्तिनिबन्धनतयैव स्यात् । अथ भेदव्यवहारसत्यता कुतस्तर्ह्यात्मनो व्यतिरेकिणः शरीरसंबन्धः । न च महाभूतव्यतिरेकेणात्मनः स्वरूपं पश्यामः चैतन्यस्य मदशक्तिवद् भूतसमुदायधर्मतयाप्युपपत्तेः । अपिच महाभूतान्यपि विज्ञानवादिनं प्रति साध्यान्येव ज्ञानाकारतया नीलाद्यवबोधसम्भवात् । अतो वक्तव्यमेतत् । अत्राभिधीयते । प्रतीयते हि बाह्योऽर्थः कथमसावपह्नूयते न ज्ञानाकारतयैव तदुपपत्तिः असंवित्प्रसङ्गात्, न ह्यात्मनैवात्मसंवित्सम्भवः । किञ्च ग्राह्यग्राहकप्रत्ययस्तावद्भेदहेतुतायामनपेक्षः । कल्प्यं त्वेकत्वमारोप्याद्याकारत्वम् । न चोपलब्धिविरोधिन्यः कल्पनाः सम्भवन्ति । न च स्वप्नादिवैतथ्येन जाग्रत्प्रत्ययवैतथ्यं जाग्रत्स्वप्नादिभिदैवान्यासिद्धेः, प्रमुषितस्मरणाभिमानत्वेऽपि च स्मार्तत्वेन बाह्यालम्बनत्वम् । अथोच्येत कथं व्यतिरिक्तोऽर्थः संविदं जनयेत् जनने वा सर्वार्थसंविदवबोधो वा स्यादिति । तदपि हीन्द्रियार्थसम्बन्धानुसारात्[1] ज्ञानोत्पादनस्याचोद्यमेव । न च सतोऽपि बाह्यस्य क्षणिकत्वं प्रत्यभिज्ञानेनैकताध्यवसानात् अन्तरा च विनाशहेत्वनुपलम्भात्सामग्र्यधीनत्वाच्च कार्योत्पादस्य स्थास्नुतायामपि क्रमयौगपद्यादिना तदसम्भवादिचोद्यानवकाश एवेत्येषा दिक् । एवञ्चेद् यथोपलम्भमर्थस्थितेर्महाभूतानि तावत् सत्यान्येव । यत् तु तत्सत्यत्वे तत्संघधर्मतया मदशक्तिवद् विज्ञानोत्पत्तौ नैरात्म्यप्रसङ्ग इति तदपि बाह्यार्थानुभूतिवदात्मनोऽप्यनुभवत एव सिद्धेरकिञ्चित्[2] ॥ १३८ ॥

किञ्च—

**महाभूतानि सत्यानि यथात्मापि तथैव हि ।**
**कोऽन्यथैकेन नेत्रेण दृष्टमन्येन पश्यति ॥ १३९ ॥**

---

१. 'मप्यन' क. ङ. पाठः. २. 'राद् विज्ञा' ग. पाठः.

यथैव ह्यनुभूयमानत्वान्महाभूतानि पृथिव्यादीनि सत्यानि एवमेवानुभवितृत्वादात्मापि सत्य एवेत्यभिप्रायः। अन्यथा हि भूतधर्मत्वे ज्ञानस्यानुभवितारमन्तरेण एकेनाक्ष्णा दृष्टं पुनस्तदेवेदं पूर्वदृष्टमित्यन्येनाक्ष्णा कः पश्येत् कोऽनुसन्दध्यादित्यभिप्रायः ॥ १३९ ॥

एतदेव भूयः स्पष्टयति —

**वाचं वा को विजानाति पुनः संश्रुत्य संश्रुताम्।**
**अतीतार्थस्मृतिः कस्य को वा स्वप्नस्य कारकः ॥ १४० ॥**

प्रपञ्चार्थमेतत् ॥ १४० ॥

आपिचानुभवत एवात्मतत्त्वावगम[1] किमत्र युक्त्या प्रयोजनम्। यो ह्यय रजस्तमोभ्यामुपप्लुतचेता.—

**जातिरूपवयोवृत्तविद्यादिभिरहङ्कृतः।**
**सक्तः शब्दादिविषये कर्मणा मनसा गिरा ॥ १४१ ॥**

स एवापरोक्षस्वसंवित् नात्मेत्यभिप्रायः ॥ १४१ ॥

किञ्च यस्तावद्योगसंसिद्ध. स निर्विकल्पमपरोक्षमद्वयं ब्रह्मावबुध्यत एव। इतरोऽपि कुतार्किकचोद्याभिमानी यः —

**स सन्दिग्धमतिः कर्मफलमस्ति न वेति वा।**
**संप्लुतः सिद्धमात्मानमसिद्धोऽपि हि मन्यते ॥ १४२ ॥**

योऽसौ कुतार्किकमानी सन्दिग्धमतिस्तमसा संप्लुतोऽवष्टब्धः सोऽपि यदैवमतिपाण्डित्याद् विकल्पयति कर्मफलमस्ति नवेति तदा सिद्धं निश्चितं शरीरव्यतिरिक्तमात्मानं मन्यत एव। असिद्धोऽपि योगदर्शनानपेक्षोऽपीत्यर्थः। यत्त्विदमुक्तं कथं महाभूतसत्यत्वे व्यतिरिक्तस्यात्मनः शरीरतया निबन्ध इति तन्महाभूतानामप्यात्मस्वरूपत्वेनाव्यतिरेकित्वाद[2]चोद्यमेव। यथानुभवानुसारेण विज्ञानात्मसत्यत्वाच्चोद्यमेवेति चेत्। न। निमित्तान्तरस्य सम्भवात् ॥ १४२ ॥

---

१. 'त्त्वागमात् किं', २. 'काद' ग. पाठः.

तथा हि —

**मम दारसुतामात्या अहमेषामिति स्थितः ।**
**हिताहितेषु भावेषु विपरीतमतिः सदा ॥ १४३ ॥**
**ज्ञेऽज्ञे च प्रकृतौ चैव विकारे चाविशेषवान् ।**
**अनाशकाग्निप्रवेशजलप्रपतनोद्यमी ॥ १४४ ॥**
**एवं वृत्तोऽविनीतात्मा वितथाभिनिवेशवान् ।**
**कर्मणा द्वेषमोहाभ्यामिच्छया चैव बध्यते ॥ १४५ ॥**

एवं श्लोकद्वयोक्तवृत्तोऽलीककुतार्किकचोद्याभिनिवेशवान् अविनीतः साधारणविशेषात्मकेन कर्मणा मानसाभ्यां च द्वेषमोहाभ्यां भोगातिविषयेच्छया च[1] व्यतिरिक्तोऽपि बध्यत इत्यभिप्रायः । मम दारपुत्रादयोऽहं चैषामित्येवं[2] अन्योन्यमुपकार्योपकारकैकतया[3] योऽवस्थितः[4] हिताहितेषु चादृष्टार्थसान्दृष्टिकार्थेषु[5] च भावेषु यो विपरीतबुद्धिः सान्दृष्टिक एव हिताभिमानी अहिताभिमानी चेतरत्र तथा ज्ञे च ज्ञातरि वेदार्थविदि अज्ञे च कुतार्किकादौ प्रकृतौ चात्मनि विकारे च रजस्तमोलक्षणे विशेषानभिज्ञः अतश्च[6] धर्मबुद्ध्याभिमानादनाशकादावुद्युक्तो यः एवंवृत्तः, स बध्यते इति[7] व्याख्यातमेतत् ॥ १४३ — १४५ ॥

एवञ्च महाघोरं संसारमापन्नस्यायं तन्मोचनप्रकारोपदेशः —

**आचार्योपासनं वेदशास्त्रस्यार्थविवेकिता ।**
**तत्कर्मणामनुष्ठानं सङ्गः सद्भिर्गिरः शुभाः ॥ १४६ ॥**
**स्त्र्यालोकालम्भविगमः सर्वभूतात्मदर्शनम् ।**
**त्यागः परिग्रहाणां च जीर्णकाषायधारणम् ॥ १४७ ॥**
**विषयेन्द्रियसंरोधस्तन्द्र्यालस्यविसर्जनम् ।**
**शरीरपरिसंख्यानं प्रवृत्तिष्वघदर्शनम् ॥ १४८ ॥**

---

१. 'चा' क. ङ. पाठः २. 'त्येवमन्यो', ३. 'रिन' ग. पाठः. ४. 'याव' क. पाठः. ५. 'वा दृष्टादृष्टार्थसाधका' ग. पाठः. ६. 'श्चावमें थ' क. ङ. पाठः. ७. 'त्यादि व्या', 'व ॥' ग. पाठः.

नीरजस्तमसः सत्त्वशुद्धिर्निस्पृहता शमः ।
एतैरुपायैः संशुद्धः सत्त्वयोग्यमृतीभवेत् ॥ १४९ ॥

आचार्योपासनादिभिरेतैरध्यर्धश्लोकत्रयोक्तैरुपायैः सम्यक् शुद्धः सात्त्विको योगं प्राप्य कैवल्यज्ञानादमृतीभवेद् ब्रह्मत्वं प्राप्नुयादित्यर्थः । स्पष्टमन्यत् ॥ १४६ — १४९ ॥

योगात् कैवल्यमुक्तम् स एव तु योगः कथं स्यादित्युच्यते —

तत्त्वस्मृतेरुपस्थानात् सत्त्वयोगात् परिक्षयात् ।
कर्मणा सन्निकर्षाच्च सतां योगः प्रवर्त्तते ॥ १५० ॥

तत्त्वानि पृथिव्यादीनि तेषामागमानुविधानेनात्माभेददर्शनं तत्त्वस्मृतिः तस्यास्तत्त्वस्मृतेरुपस्थानादुद्भवात् नीरजस्तमस्कत्वेन[1] च सत्त्वयोगाद् जन्मान्तरकृतानां च ध्यानादिना परिक्षयात् कर्मणां संनिकर्षाच्च सम्बन्धात् सतां साधूनां योगः परानन्दप्राप्तिलक्षणः प्रवर्तत इति व्याख्येयम् ॥ १५० ॥

यद्यपि च कथञ्चिद्युक्तस्यापि प्रमादात् परप्राप्तिर्न स्यात्, तथाप्यानुषङ्गिकफलतयैव तावत् —

शरीरसंक्षये यस्य मनः सत्त्वस्थमीश्वरम् ।
अविप्लुतस्मृतिः सम्यक् स जातिस्मरतामियात् ॥

शरीरसंक्षये उत्क्रान्तिकाले यस्य मनो विषयानासक्तं सत्त्वस्थमीश्वरमपराधीनं रागाद्यनभिभूतं[2], स सम्यगविनष्टस्मृतिः प्रेत्य जातिस्मरतामियात् जातिस्मरतां प्राप्नुयात् । ततश्च पुनरपि योगसंबन्धादमृतीभवत्येवेत्यभिप्रायः ॥ १५१ ॥

किञ्च स्वयंकृतैरेव शुभाशुभैः कर्मभिर्युज्यमानः—

यथाहि भरतो वर्णैर्वर्तयत्यात्मनस्तनुम् ।
नानारूपाणि कुर्वाणस्तथात्मा कर्मजस्तनुम् ॥ १५२ ॥

---

१. 'जस्त्वेन', २. 'रमान' क. ङ. पाठः. ३. 'योग' ग. पाठः.

उपसंहारार्थः श्लोकः । भरतो नटः स यथा स्वां तनुं भूमिकाविशेषानुसारेण वर्णैर्वर्तयति, एवं कर्मजोऽपि विज्ञानात्मा नानाविधानि शुभाशुभानि कर्माणि कुर्वन् विचित्रासु योनिषु संभूतिं निर्वर्तयतीत्यर्थः ॥ १६२ ॥

ननु च जातिस्मरत्वेऽप्यविकलाङ्गस्यैव धर्मानुष्ठानसामर्थ्यात्तत्रैव तावदुपायो वक्तव्यः[1]। उच्यते। नात्रोपायाभिधानमुपयुज्यते, स्वाभाविकत्वादविकलाङ्गताया । तथा हि—

**कालकर्मात्मबीजानां दोषैर्मातुस्तथैव च ।**
**गर्भस्य वैकृतं दृष्टं नाङ्गहानं हि जन्मतः ॥ १६३ ॥**

कालदोषः प्रतिषिद्धरात्र्युपगमादिकः । गर्भाधानादिकर्मणि वैगुण्यमक्रिया वा कर्मदोषः । अनिष्टस्त्र्यन्तराभिध्यानादिकस्त्वात्मदोषः । अल्पत्वादिको बीजदोषः । परपुरुषाभिध्यानं मातृदोषः । एवमादिभिर्दोषैर्गर्भविक्रिया वैरूप्यं, न तु जन्मतः स्वभावतोऽङ्गहानमित्यभिप्रायः ॥ १६३ ॥

यत्त्विदमुक्तं[2] कथमक्षरस्य ब्रह्मणः संसारापत्तिरिति, अत्रोच्यते —

**अहङ्कारेण मनसा गत्या कर्मफलेन च ।**
**शरीरेण च नात्मायं मुक्तपूर्वः कदाचन ॥ १६४ ॥**

अन्य एव ह्यसौ नित्यमवस्थितः परमानन्दरूपः परमात्मा । अयं त्वन्य एव । तदविभागेऽप्यनादितयैवावच्छिन्नो विज्ञानात्माहङ्कारादिभिः, शरीरेण च न वियुक्तः । तस्यैव[3] चायं परब्रह्माभेदप्राप्त्यर्थो भगवत आम्नायस्य प्रयत्नः ॥ १६४ ॥

अस्यैव च[5] परप्राप्त्युपदेशमार्गस्य यदि परं रोगितया विघातः, तत्रापि[4]तदुच्यते —

**दाता सत्यः क्षमी प्राज्ञः शुभकर्मा जितेन्द्रियः ।**
**तपस्वी योगशीलश्च न रोगैः परिभूयते ॥ १६५ ॥**

निगदोक्तः श्लोकः ॥ १६५ ॥

---

१. 'व्यः ना' क. पाठः. २. 'तः । यत्त्वि' क ङ. पाठः. ३. 'चाय' ग. पाठः.
४. 'त्राप्य' क. ङ. पाठः. ५ 'चाय प' ग. पाठः.

ननु च साधारणविशेषात्मकस्य कर्मणोऽनादिनिधनत्वाद् यथैवानादि शरीरसम्बन्धः, तथैवानन्तोऽपि । ततश्चानिर्मोक्षप्रसङ्गात् तत्प्रतिपादनप्रयासानर्थक्यमेव स्यात् । उच्यते—

**वर्त्याधारस्नेहयोगाद् यथा दीपस्य संस्थितिः ।**
**विक्रियापि च दृष्टैवमकाले प्राणसंक्षयः ॥ १५६ ॥**

आरम्भकानादितया ह्यारभ्यस्यानादितैव स्यान्न त्वनन्ततयानन्ततापि । न ह्यवश्यं कारणविनाशादेव कार्यविनाशः, तत्सद्भावेऽप्यन्यतो नाशदर्शनात् । तथाच वर्त्याधारस्नेहयोगात् तदारभ्यस्य प्रदीपादेर्यावत्कारणं च संस्थितिर्दृष्टा निमित्तान्तरादपि वाताद्यभिघाताद् विक्रिया । एवमात्मनोऽपि कर्मकार्यशरीरसंबन्धिनस्तदनुच्छेदेऽप्यन्यतस्तत्त्वावबोधादेरकाले प्राणसंक्षयः सूक्ष्मावच्छेदकलिङ्गादिसंक्षय इत्यर्थः । सांसारिकत्वेऽपि चैवमेव तीव्रफलकर्मादिसन्निपातात् पुरुषस्य शरीरसक्षयो योज्यः ॥ १५६ ॥

तदिदानीं प्राणसक्षयहेतुभूत तत्त्वावगमोपायं प्रपञ्चयति—

**अनन्ता रश्मयस्तस्य दीपवद्यः स्थितो हृदि ।**
**सितासिताः कद्रुनीलाः कपिलापीतरोहिताः ॥ १५७ ॥**

योऽसौ पूर्वव्याख्यातो दीपवद् हृदि निदिध्यास्यतयावस्थितस्तस्य प्राप्त्युपायास्तदवभासकतया अनन्ता रश्मयो नाड्यः सितादिवर्णाः । सिता चात्र शुक्ला निष्कलङ्का परप्राप्तिरभिप्रेता । तदुपायतया च नाड्यां तच्छब्दयम् । एवं कद्र्वादिष्वपि योज्यम् । सितैकैव । अन्याः सर्वा असिताः । तत्प्रपञ्चः कद्रुनीलौ इत्यादिकः । यथाविप्रकर्षं योज्यम् । कद्रुशब्दः कुत्सितगत्यर्थो नीलादिविशेषणो न वर्णवचनः । कुत्सितगत्यर्था नीलाः कद्रुनीलाः कद्रुपिङ्गला इति च योज्यम् । आपीता हरिताः । तथाचाम्नायः—"तस्मिन् शुक्लमुत नीलमाहुः पिङ्गलं हरितं लोहितं चे"त्यादि ॥ १५७ ॥

---

१. 'प्या', २. 'त्संभवे', ३. 'रायुषः श', ४. 'दि चात्र', ५. 'त्यादि' ग. पाठः.

परप्राप्त्युपायभूतश्च सुषुम्नाख्यो हृदयादूर्ध्वमृजुर्मूर्धानमभिप्रस्थित[1] शुक्लो रश्मिः —

**ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम् ।**
**ब्रह्मलोकमतिक्रम्य[2] तेन याति परां गतिम् ॥ १५८ ॥**

काम्योपासनयोगाद् ब्रह्मार्पणन्यायेन वा य कर्मण्यवस्थितः —

**यदस्यान्यद् रश्मिशतमूर्ध्वमेव व्यवस्थितम् ।**
**तेन देवनिकायानां स धामानि प्रपद्यते ॥ १५९ ॥**

वस्वादयो देवनिकायाः । स्पष्टमन्यत् ॥ १५९ ॥

यस्तु कामात्मको राजस खलु कर्मानुसारेणैव —

**येऽनेकरूपाश्चाधस्ताद् रश्मयोऽस्य मृदुप्रभाः ।**
**इह कर्मोपभोगार्थास्तैश्च सञ्चरतेऽवशः ॥ १६० ॥**

कृतव्याख्यानः श्लोकः ॥ १६० ॥

एवञ्चैतत् परावरं ब्रह्मणः स्वरूपमालोच्य सर्वस्यात्माधिगमव्यतिरिक्तस्य प्रयासस्य निष्प्रयोजनत्वाद् यथाकथञ्चित्स्वशक्त्यनुसारेणात्मान ज्ञातु हे मुनय ! प्रयत्नः क्रियतामित्येवं योगीन्द्रो वक्तुमाह —

**वेदैः शास्त्रैः सविज्ञानैर्जन्मनामरणेन च ।**
**आध्या गत्या तथागत्या सत्येन ह्यनृतेन च ॥ १६१ ॥**
**श्रेयसा सुखदुःखाभ्यां कर्मभिश्च शुभाशुभैः ।**
**निमित्तशकुनज्ञानैर्ग्रहसंयोगजैः फलैः ॥ १६२ ॥**
**तारानक्षत्रसञ्चारैः जलजैः स्वप्नजैरपि ।**
**आकाशपवनज्योतिर्जलभूतिमिरैस्तथा ॥ १६३ ॥**
**मन्वन्तरैर्युगप्राप्त्या मन्त्रौषधिबलैरपि ।**
**वित्तात्मानं विद्यमानं कारणं जगतः सदा ॥ १६४ ॥**

सर्वप्रकारं वेदादिभिर्मन्त्रौषधिबलान्तैर्यथासामर्थ्यमात्मानं वित्त वेत्तुं प्रयत्निनो भवथ । यथाशक्ति आत्मज्ञानाय प्रयत्नः क्रियतामित्यभिप्रायः ।

---

१. 'तिष्ठितः' ग. पाठः. २ 'न्ति' ङ. पाठः.

वेदाद्युपायासंभवेऽपि[1] जन्ममरणादिभिरपि निमित्तशकुनज्ञानादिभिरपि मन्त्रौषधिबलैरपि, न त्वसभाव्योपायतयात्मज्ञानाय[2] शैथिल्यं कार्यम्, अवश्यं चात्मज्ञानं कार्यमित्येवम्परत्वादारम्भस्य । न मन्त्रौषध्यादावत्यभिनिवेशः कार्यः । वेदैस्तत्त्वज्ञानोपायभूतैः[3], शास्त्रैः व्याकरणादिभिः शास्त्रैः, सविज्ञानैः विविधेतिहासादिज्ञानसहितैः । जन्मना इहावधारणाशक्तावन्येनापि जन्मनेत्यर्थः । आमरणेन च यावज्जीवमत्यभियोगेनेत्यर्थः । चशब्दो जन्मान्तरशतैरप्यपराभङ्गप्रदर्शनार्थः । आध्या महत्यापि मनःपीडया । गत्या देशान्तरगमनेन । अगत्या एकावस्थानतया । तथाशब्दश्चैवंभूतप्रकारान्तरार्थः । सत्येनैकात्म्यदर्शनेन । अनृतेन चतुर्भुजादिकल्पितोपासनाप्रकारेण । श्रेयसा पारिव्राज्येन । सुखदुःखाभ्यां कर्मभिश्च शुभाशुभैरिति चशब्देन सुखादीनां समुच्चयाद् गार्हस्थ्येनेत्यर्थः । सुखं गन्धमाल्यादिसेवनम्, असुखं यमनियमावस्थितिः, शुभं कर्माग्निहोत्रादि, अशुभं कर्म सर्वस्वारादि* विहितत्वेऽपि मरणसंबन्धादशुभत्वम्, असामर्थ्ये च ज्ञानक्षमशरीरान्तरोत्पादकत्वात् प्रकृतोपयोगित्वम् । निमित्तादिज्ञानैश्च अभ्युदयकालमुपलक्ष्यानिर्वेदेन पुनः पुनः प्रवृत्त्यर्थं निमित्तं दक्षिणाक्षिस्पन्दनादि उदगयनादि च । शकुनज्ञानं वायसरुतादिज्ञानम् । ग्रहसंयोगश्चन्द्रबलादिः । तारानक्षत्रसञ्चारः क्रूरग्रहैर्जन्मनक्षत्राद्यपीडनम् । जलजानि तीर्थयात्रादीनि[6] । स्वप्नजानीष्टस्वप्नदर्शनानि । अपिशब्दः पूर्ववदुपायत्वसंभावनार्थः । आकाशादिभिश्च परमार्थतः पुराणदर्शनानुसारेणोत्पन्नैर्जायमानैस्तिमिरैश्च तदनुसारेणैवादित्यरूपात्मतत्त्वावरोधकैः तथैव तदुक्तप्रकारेणैवापनीयमानैः । तद्दर्शनादेव च मन्वन्तरयुगादिप्राप्त्या कालचक्रज्ञानेनापि । प्रज्ञास्थैर्यहेतुभिर्मन्त्रौषधिबलैर्वित्तात्मानम् । कथंलक्षणं, विद्यमानं सदा विद्यमानं कालत्रयपरामर्शशून्यमित्यर्थः । कारणं जगत इत्युक्तार्थमेतत् । न चायमतिपरोक्षः केवलागमिकत्वमात्रेण श्रद्धेय आत्मलक्षणोऽर्थः, किं तर्हि, प्रमाणान्तरमत्रोक्तमेव "महाभूतानि सत्यानि यथात्मापि तथैवे"त्यत्र ॥ १६१—१६४ ॥

---

१. 'पि च ज', २. 'सत्त्वसंभा' ग. पाठः. ३ 'तैश्च व्या', ४. 'पि इत्यपरभ' ङ. पाठः. ५. 'रार्थः', ६. 'नि फलानि । स्व' ग. पाठः.

---

* सर्वस्वारः क्रतुविशेषः ।

भूयश्चोपसंहारार्थं सौहृदात् तदेव स्पष्टयति —

अहङ्कारः स्मृतिर्मेधा द्वेषो बुद्धिः सुखं धृतिः ।
इन्द्रियान्तरसञ्चार इच्छाधारणजीविते ॥ १६५ ॥
स्वप्नेसर्गश्च भावानां प्रेरणं मनसोऽगतिः ।
निमेषश्चेतना यत्न आदानं पाञ्चभौतिकम् ॥ १६६ ॥
यत एतानि चिह्नानि दृश्यन्ते परमात्मनः ।
तस्मादस्ति परो देहाद्देही सर्वग ईश्वरः ॥ १६७ ॥

मेधा प्रज्ञातिशयः । धृतिर्धारणा । इन्द्रियान्तरगृहीतस्य परामर्शः इन्द्रियान्तरसञ्चारः । इच्छया यद्धारणं शरीरस्य तत्परित्यागः तदिच्छाधारणम् । स्वप्नेऽनेकविधो विद्यमानभूतसर्गः स्वप्नेसर्गः । तथाचाम्नायोऽपि — "न तत्र रथा" इत्युपक्रम्य "अथ रथान् रथयोगान् पथः सृजत" इत्यादि । प्रेरणं तु मनसो जाग्रदवस्थायामपि । अगतिर्मनसः सुषुप्तावस्थायाम् । निमेषः सर्वकायिकचेष्टोपलक्षणम् । चेतना अन्तर्वर्तिनी । प्रयत्नः सर्वप्रकारः । आदानं ग्रहणं त्रिविधकर्मानुसारेण । पाञ्चभौतिकं पृथिव्यादिपञ्चभूतविषयम् । यतश्चैतानि भूतधर्मवैलक्षण्येन परमात्मनश्चिह्नभूतान्युपलभ्यन्ते, तस्मादस्ति देहाद् देहवर्तिनः क्षेत्रज्ञाद् व्यतिरिक्तोऽन्यो देही क्षेत्रज्ञः सर्वगतः परः परमात्मा ईश्वरः कर्मणा ग्रहीतुमशक्यः आनन्दोऽजरोऽमृत इत्यर्थः । अत्र च जाग्रत्स्वप्नसुषुप्तावस्थानुयायित्वं महाभूताद्यादानोपपत्तिश्चाव्यतिरेकाभिप्रायेण परमात्मलिङ्गम् । अवशिष्टानि तु विज्ञानात्मसाधारणान्यपि ब्रह्मणः परावरात्मकत्वसिद्ध्यर्थं प्रसङ्गादुपन्यस्तानीत्यवगन्तव्यम् । स्पष्टमन्यत् ॥ १६५—१६७ ॥

इदानीं क्षेत्रज्ञपरयोर्विवेकं परावरत्वं च ब्रह्मण क्षेत्रज्ञाभिधानानुगमद्वारेण स्पष्टीकरोति —

बुद्धीन्द्रियाणि सार्थानि मनः कर्मेन्द्रियाणि च ।
अहङ्कारश्च बुद्धिश्च पृथिव्यादीनि चैव ह ॥ १६८॥

---

१. 'स्था । नि', २. 'हान्तरव' ग. पाठ

बुद्धीन्द्रियाणि चक्षुरादीनि । एषामर्था रूपादयः । अहङ्कारः प्रत्यगात्मन्यवमर्शोऽन्यकारणासंसृष्टो बुद्धिनिमित्तकः । बुद्धिरनुभवहेतुफलाक्रिया । चशब्दादव्यक्तं प्रधानाख्यं, तच्च न सांख्याभिमतं सत्त्वादिगुणसाम्यावस्थात्मकं, किन्तर्हि जगत्कारणभूतं साधारणात्मकम् । तदुक्तं — "यो द्रव्यदेवतात्यागसंभूतो रस" इत्यत्र । सत्त्वादीनां त्वात्मगुणत्वमेव । स्पष्टमन्यत् ॥ १६८ ॥

एवञ्चतुर्विंशतितत्त्वात्मकं यत् क्षेत्रम् —

**अव्यक्त आत्मा क्षेत्रज्ञः क्षेत्रस्यास्य निगद्यते ।**
**ईश्वरः सर्वभूतानां सन्नसन् सदसच्च सः ॥ १६९ ॥**

अस्य चतुर्विंशतितत्त्वात्मकस्य वेत्ताधिष्ठातृत्वेन फलभोक्तृतया चेश्वरोऽव्यक्ते च कर्मण्यवस्थितः कर्मावबद्धो यः क्षेत्रज्ञ इत्येवं ब्रह्मविद्भिः स निगद्यते । तथाच व्यासः —

"एतद् यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः"

इति । यद्वा आत्मविशेषणत्वेनाव्यक्त इत्येतद्योजनीयम् । अव्यक्तो रूपाद्यसंसृष्ट इत्यर्थः । सर्वभावानां तु क्षेत्रक्षेत्रज्ञात्मकानां य ईश्वरः स परमात्मा इत्येवमनयोर्भेदः । भूतशब्दो भावमात्रतया क्षेत्रज्ञवचनोऽपि । यश्चायं परमात्मा सन् असन् सदसच्च, सः सन् क्षेत्रज्ञतया असन् परमात्मरूपतया सदसदित्येवं व्यपदेशात् । परमार्थतस्तु यत् सदसच्च यत् तत्सर्वं स एव सदसदात्मकः, तथैवोपलम्भात् । तथाचाम्नायः — "द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं चे"ति ॥ १६९ ॥

इदानीं क्षेत्रज्ञोत्पत्तिक्रमं दर्शयति —

**बुद्धेरुत्पत्तिरव्यक्तात् ततोऽहङ्कारसंभवः ।**
**तस्मात्खादीनि जायन्ते एकोत्तरगुणानि तु ॥ १७० ॥**

सुषुप्तावस्थायामेव तावत् सर्वविज्ञानमहाप्रलये सत्यव्यक्तादुपभोगनिमित्तात् कर्मणः सकाशाद् बुद्धेरुत्पत्तिः । ततश्च प्रबोधात् प्रत्यगा-

१. 'ल' क ख. पाठः. २ 'म्यात्म', ३. 'तसा' ङ. पाठः. ४. 'न चेश्वरः फ', ५. 'क्ते क', ६. 'वमादि योज' ७. 'त्रज्ञा', ८. 'रू' ग. पाठः.

त्मन्यवबोधादहङ्कारसम्भवः । तथैव बाह्यविषयप्रसङ्गादाकाशादीन्येकोत्तरगुणान्येकद्वित्रिचतुष्पञ्चगुणानीत्यर्थः। तद्ग्राहकत्वप्रयुक्तानि च तद्विकारापत्त्या तदात्मकानीन्द्रियाणि मनश्चादावेव स्वविषयानुसारात् सदसदात्मकमित्येषा प्रक्रिया सृष्टिप्रलयोपवर्णनादौ सर्वत्र पुराणादिष्वपि योज्या ॥ १७० ॥

यानि च खादीन्यत्राकाशपवनज्योतिर्जलपृथिव्यन्तानि एकोत्तरगुणत्वेन महाभूतान्युक्तानि—

**शब्दः स्पर्शश्च रूपं च रसो गन्धश्च तद्गुणाः ।**

उत्तरत्र चशब्दः पूर्वगुणसमुच्चयार्थः रसश्चेत्यत्रापिच्छन्दोनुरोधादनुच्यमानोऽपि द्रष्टव्यः ।

सृष्टौ च—

**यो यस्मिन्नाश्रितस्तेषां स तत्रैव प्रलीयते ॥ १७१ ॥**

भूतेषु च गुणानां प्रलयात् परमात्मनो निर्गुणत्वसिद्धिः ॥ १७१ ॥

इदानीं पूर्वोक्तमर्थं कार्त्स्न्येनोपसंहरति—

**यथात्मानं सृजत्यात्मा तथा वः कथितं मया ।**
**विपाकस्त्रिप्रकाराणां कर्मणामीश्वरोऽपि सन् ॥ १७२ ॥**

उक्तनिगदार्थः श्लोकः ॥ १७२ ॥

त्रिरूपकर्मविपाकात्मकमव्यक्तमदृष्टं प्रधानाख्यं संसारप्रवृत्तिबीजं न पुनस्तन्त्रान्तराभिप्रायेण सत्त्वादिगुणसाम्यलक्षणं, यतो न सत्त्वादयः प्रकृतिगुणाः, किन्तर्हि—

**सत्त्वं रजस्तमश्चैव गुणास्तस्यैव कीर्तिताः ।**

आत्मनो न प्रकृतेरित्यर्थः ।

यद्येवं कथं तर्हि बन्धमुक्त्यादिव्यवस्था, उच्यते—

**रजस्तमोभ्यामाविष्टश्चक्रवद् भ्राम्यते हि सः ॥ १७३ ॥**

तदुच्छेदात् तु सत्त्वगुणयोगात् स्वरूपावस्थितेर्मुच्यत एवेत्यभिप्रायः ॥ १७३ ॥

---

१. 'यग्रहणप्र', २. 'मा' क. पाठः.

इदानीं परावर ब्रह्मोपसंहर्तुमाह—

अनादिमानादिमांश्च य एष पुरुषः परः।
लिङ्गेन्द्रियैरुपग्राह्यः सविकार उदाहृतः ॥ १७४ ॥

महदादिभिर्विकारैः क्षेत्रलक्षणमहदादिसम्बन्धादादिमान् क्षेत्रज्ञः, यश्चानादिरकलङ्कः परमात्मा उभयरूपत्वाल्लिङ्गेन्द्रियोपग्राह्यतया उदाहृतः, स एष भगवानुभयप्रकारः सदसदात्मना विश्वरूपः परमात्मैवेत्यवगन्तव्यम्। नात्र व्यामोहः कार्य इत्यभिप्रायः। लिङ्गादीन्यहङ्कारादीन्यात्मविषयत्वेन, इन्द्रियाणि चक्षुरादीनि प्रकृतिविषयत्वेनेत्येवं योजना ॥ १७४॥

यश्चाय क्षेत्रज्ञतया प्रविभक्तः तस्येन्द्रियोपलब्धवाह्यलिङ्गसंसूचितमुत्कर्षापकर्षहेतुमार्गमाह—

पितृयाणोऽजवीथ्याश्च यदगस्त्यस्य चान्तरम्।
तेनाग्निहोत्रिणो यान्ति प्रजाकामा दिवं प्रति ॥ १७५ ॥

"यदस्यान्यद्रश्मिशतमि"त्याद्यनन्तरं मार्गाभिधानं, तस्यैवेदमुपलक्षणत्वेन बाह्यमार्ग(मु?उ)च्यते—यदेतदजवीथ्यगस्त्ययोरन्तरं स पितृयाणः पन्थाः। तेनाग्निहोत्रिणः प्रजाकामाः कर्ममात्रनिष्ठाः संवत्सरोपासका यान्ति। एवं मार्गान्तरेऽपि योज्यम्। पुराणे हि भगवतः सवितुर्बह्वयो वीथ्यो दिवि पद्धतयः श्रूयन्ते। तत्रागस्त्यस्यानन्तरा अजवीथी। स्पष्टमन्यत् ॥ १७५ ॥

किञ्च—

येऽपि दानपराः सम्यगष्टाभिश्च गुणैर्युताः।
तेऽपि तेनैव गच्छन्ति सत्यव्रतपरायणाः ॥ १७६ ॥

दया सर्वभूतेषु क्षान्तिरनसूयेत्यादयोऽष्टावात्मगुणाः। प्रसिद्धमन्यत् ॥ १७६ ॥

यश्चानेन मार्गेण द्युलोकः, तत्र—

अष्टाशीतिसहस्राणि मुनयो गृहमेधिनः।
पुनरावर्तिनो बीजभूता धर्मप्रवर्तकाः ॥ १७७ ॥

---

१. 'स्मा वि' ग. पाठः. २. 'ह्यं मा' ङ. पाठः.

तिष्ठन्तीति शेषः । तस्यां हि जनस्थानसंज्ञायां दिवि गृहमेधिनो गृहस्थाः कर्मणाग्निहोत्रादिना लोकजितः संसारबीजभूताः प्रलीयमानधर्मोद्धारप्रवर्तकाः अष्टाशीतिसहस्रास्तत्परिमाणा अग्निहोत्रादिना तत्र यान्ति । पुनर्धर्मप्रवर्तनायेहाभिमुख्येन वर्तन्त इत्येवं तत्प्रवर्तकाः पुनरावर्तिन इति व्याख्येयम् ॥ १७७ ॥

देवयानेनाप्येवमेव मार्गेण —

**सप्तर्षिनागवीथ्योस्तु देवलोकं समाश्रिताः ।**
**तावन्त एव मुनयः सर्वारम्भविवर्जिताः ॥ १७८ ॥**

अयमपि पूर्ववत् ॥ १७८ ॥

सप्तर्षिनागवीथ्योरन्तरालेन च योऽय लोकः —

**तपसा ब्रह्मचर्येण संगत्यागेन मेधया ।**
**यातास्तत्रावतिष्ठन्ति यावदाभूतसंप्लवम् ॥ १७९ ॥**

ननु च कार्यार्थत्वाद् वेदस्य प्रमाणान्तरस्य च भावान्निर्मूलकमिवेदं मार्गादिनिरूपण लक्ष्यते, सत्यं, यदि कार्यार्थतयैव वेदस्य प्रामाण्यं स्यात् । स्वरूपेऽपि तु प्रामाण्यमिष्यत एव —

**यतो वेदाः पुराणं च विद्योपनिषदस्तथा ।**
**श्लोकाः सूत्राणि भाष्याणि यत्किञ्चिद्वाङ्मयं क्वचित् ॥**
**वेदानुवचनं यज्ञो ब्रह्मचर्यं तपो दमः ।**
**श्रद्धोपवाससातत्यमात्मनो ज्ञानहेतवः ॥ १८१ ॥**

यदिहि कर्मानुष्ठानमात्रनिमित्ततया क्रियैव वेदार्थः स्यात्, ततः स्वरूपपरता न स्यात् । यदा तु नियोगसिद्धिरेव वाक्यार्थः, तदा नियोज्यत्वावगमे एव तत्सिद्धिः । प्रतिपन्नात्मस्वरूपस्यैव निर्वर्तितनियोगता स्यात् । त तश्चात्मस्वरूपावगतिरेव वेदार्थ इति स्वरूप एवावसितं वेदस्य प्रामाण्यम् । किञ्च कार्यतया व्युत्पत्तेः कार्ये प्रामाण्यमुक्तम् । न च परार्थस्य कार्यत्वोपपत्तिः ।

---

१. 'दपि । च', २. 'ज्य तत्त्वा', ३. मत ए' क. पाठः. ४. 'व च नि' ग. पाठः. ५. 'द्वि' ङ. पाठः.

को हि परार्थं बुद्धिपूर्वकारी कुर्यात् । अतः स्वार्थ एव कार्यं, न चान्योऽतः कश्चिदात्मनोऽर्थोऽन्यत्र स्वरूपज्ञानादिति तदेव कार्यमवशिष्यते । अतश्च पारमार्थिकं तत्रैव भगवतो वेदस्य प्रामाण्यम् । तथाचोक्तं — "चोदना हि भूतं भवन्तं भविष्यन्तमित्याद्येवंजातीयकमर्थं शक्नोत्यवगमयितुमि"ति । एवंजातीयकम् आत्मस्वरूपमित्यर्थः । तथाचेन्द्रियान्तरप्रतिषेधस्ताद्विषयतयैवोपपद्यते "नान्यत्किञ्चनेन्द्रियमि"ति । अन्यथा हि विध्यर्थे तत्प्राप्त्यभावादाकस्मिक एव प्रतिषेधः स्यात् । अतो ब्रह्मस्वरूप एवाम्नायस्य प्रामाण्यं स्यात् । तदेव च पारमार्थिकं विध्यर्थसतत्त्वम् । यत्तु अग्निहोत्रादिकार्यावबोधनं, तद् अवान्तरवाक्यार्थतया तदपेक्षिताविद्याव्युदासपरत्वेन तदुपायतयैव प्रमाणान्तराविषयतया कार्यव्यपदेशभागित्यवसेयम् । एवं चेन्मार्गादिस्वरूपप्रतिपादनेऽप्यविरुद्धं कार्यव्यपदेशित्वमित्येषा दिक् । तद्दर्शयति — यतो वेदाः पुराणं चेत्येवमादयः सर्वे एवात्मनो ज्ञानहेतवः, शब्दप्रवृत्तेस्तत्परतयैव व्युत्पत्त्यवधारणात् । ततः स्वरूपेऽप्यव्याहतं प्रामाण्यं वेदस्य । अतश्च मार्गादिस्मृतेरप्यनवद्यं वेदमूलत्वमित्यभिप्रायः । पुराणं चेतीतिहासार्थश्चशब्दः । विद्या मीमांसादिका । उपनिषदां पृथग्वचनं वेदभागान्तरस्य तादर्थ्यप्रदर्शनार्थम् । तथा श्लोकाः उपनिषत्सूत्रस्थानीया मन्त्रा एव । "तदप्येते श्लोकाः — अणुः पन्था विततः पुराण" इत्यादिकाः । उपनिषत्सूत्रताप्रतिपत्त्यर्थमेव च तेषां पृथग्वचनम् । तद्विवरणार्थान्येव चार्थवादादिवाक्यानि भाष्याणि । प्राधान्याच्चायमुपनिषदामतिप्रपञ्चः । किञ्च यत्किञ्चिद्वाङ्मयं क्वचिदिति । लोके ह्यप्यात्मपरतयैव शब्दव्युत्पत्तिरित्यर्थः । एवञ्च वेदानुवचनादिस्तादर्थ्येनैव चातुराश्रम्यप्रयासः । तथाम्नायः — "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्त"त्यादि । गुरूक्तस्यानुपाठो वेदानुवचनम् । आद्यं ब्रह्मचर्यम् । यज्ञा इति गार्हस्थ्योपलक्षणम् । ब्रह्मचर्यं नैष्ठिकत्वम् । तपो दम इति वानप्रस्थत्वम् । श्रद्धोपवाससातत्यमिति पारिव्राज्यं, "अष्टौ ग्रासा मुनेर्भक्तम्" इति वचनात् । लघ्वशनार्थो वायमुपवासशब्दः । व्याख्यातमतन्यत् ॥ १८०,१८१ ॥

यतश्चैतदेवम् अतः —

**स ह्याश्रमैर्निदिध्यास्यः समस्तैरेवमेव तु ।**

सर्वारम्भाणां तत्परत्वादित्यभिप्रायः ।

किंच —

**द्रष्टव्यस्त्वथ मन्तव्यः श्रोतव्यश्च द्विजातिभिः॥१८२॥**

द्विजातिवचनं द्वितीयस्योपनयनजन्मनस्तादर्थ्यप्रदर्शनार्थम् । द्रष्टव्यः प्रत्यक्षादिना । श्रोतव्य आगमात् । मन्तव्यस्तर्केण । क्रमभेदश्छन्दोनुरोधात् । निदिध्यास्यः साक्षात्कर्तुं योगमार्गेण ॥ १८२ ॥

पूर्वोक्तमार्गद्वयानुसारिणश्च —

**य एवमेनं विदन्ति ये चारण्यकमाश्रिताः ।**
**उपासते द्विजाः सत्यं श्रद्धया परया युताः ॥१८३॥**

अरण्यमेवारण्यकम् । एवं विदन्तीति प्रक्रमानुसारादिह हिरण्यगर्भाद्यवान्तरं ब्रह्मस्वरूपम् । स्पष्टमन्यत् ॥ १८३ ॥

ये चैवं विदुः —

**क्रमात् ते सम्भवन्त्यर्चिरहःशुक्लं तथोत्तरम् ।**
**अयनं देवलोकं च सवितारं सवैद्युतम् ॥ १८४ ॥**
**ततस्तान् पुरुषोऽभ्येत्य मानसो ब्रह्मलौकिकान् ।**
**करोति पुनरावृत्तिस्तेषामिह न विद्यते ॥ १८५ ॥**

अर्चिरादिमार्गोऽयं परमात्मविषयो यथोपासनासामर्थ्यं क्रमेणानेकविधलोकजयहेतुः पौराणिकैः प्रपञ्चितः । वैद्युत इन्द्रो मानसादभिध्यानात् संस्तुतः । अयमेवान्तरात्मा मानसः पुरुषः । अनागमनं चात्र तद्भावापत्तिः । इह ब्रह्माण्डान्तर्वर्तिनि विकारे पुनरावृत्त्यभावः । स्पष्टमन्यत् ॥ १८४, १८५ ॥

अजवीथिमार्गावस्थित्या च —

**यज्ञेन तपसा दानैर्ये हि स्वर्गजितो नराः ।**
**धूमं निशां कृष्णपक्षं दक्षिणायनमेव च ॥ १८६ ॥**

---

१ 'ग्रन्त' ग. पाठः. २. 'ध', ३. 'स्कु' ग. पाठः. ४. 'त्तिः ब्र' ङ. पाठः.
५. 'र्गस्थि' ग. पाठः.

**पितृलोकं चन्द्रमसं नभो वायुं जलं महीम् ।**
**क्रमात् ते सम्भवन्तीह पुनरेवं व्रजन्ति च ॥ १८७॥**

धूमादिक्रमेण चन्द्रान्तं तथानन्तरोक्तन्यायेन गतिं प्राप्य पुनराकाशादिक्रमेण पृथिवीं प्राप्नुवन्ति । ततश्च पुनरेवोत्कृष्यमाणाश्चक्रवत्[1] क्रमात् संसारबीजभावं प्रतिपद्यन्ते इत्यवसेयम् । ऋज्वन्यत् ॥ १८६, १८७ ॥

रजस्तमोभ्यामतिपरिप्लवादनुन्मीलनचेताः —

**एतद् यो न विजानाति मार्गद्वितयमात्मनः ।**
**दन्दशूकः पतङ्गो वा भवेत् कीटोऽथवा कृमिः ॥ १८८ ॥**

तस्यापि च क्रमाभ्युदयस्य कदाचित्पुण्योदयाद् यज्ञाद्युपयोगितां[2] प्राप्य पुनरुत्कर्षसिद्धिः । दन्दशूको दंशनशीलः सर्पादिः । स्पष्टमन्यत् ॥१८८॥

इदानीमतिसौहृदात् [3]रहस्यमप्यनुग्रहभूतं योग[4]मार्गसम्प्रदायमाह —

**ऊरुस्थोत्तानचरणः सव्ये न्यस्येतरं करम् ।**
**उत्तानं किञ्चिदुन्नम्य मुखं विष्टभ्य चोरसा ॥ १८९ ॥**
**निमीलिताक्षः सत्त्वस्थो दन्तैर्दन्तानसंस्पृशन् ।**
**तालुस्थाचलजिह्वश्च संवृतास्यः सुनिश्चलः ॥ १९० ॥**
**सन्निरुध्येन्द्रियग्रामं नातिनीचोच्छ्रितासनः ।**
**द्विगुणं त्रिगुणं वापि प्राणायाममुपक्रमेत् ॥ १९१ ॥**

योगशास्त्रान्तरानुसारात्[5] प्राणायामो रेचकादिलक्षणोऽवसेयः । स्पष्टमन्यत् । एते च पद्मासनादयो मनःसमाधानहेतुत्वेनार्थप्राप्ता[6] एव योगाङ्गतया नियम्यन्ते । अतश्चान्यथाप्येकाग्रता न विरुध्यत इति[7] केचित् । तथाच दक्षेणोक्तं — "न च पद्मासनाद्योग" इत्यादि । तत्तु नियामकत्वाच्छास्त्रस्यायुक्तमेव । दक्षवचनं त्विन्द्रियजयप्रशंसार्थत्वादविरुद्धम्[8] ॥ १८९ — १९१ ॥

---

१. 'त् सं' ग. पाठः. २. 'ज्ञोप', ३. 'रप्राप्त्यु', ४. 'गमा', ५. 'स्त्रानुसारेण प्रा', ६. 'प्ता यो', ७. 'ति । त', ८. 'द्धमेव । प्रा' ग. पाठः.

प्राणायामैश्चात्मानं संशोध्य —

**ततो ध्येयः स्थितो योऽसौ हृदये दीपवत् प्रभुः ।**
**धारयेत् तत्र चात्मानं धारणां धारयन् बुधः ॥ १९२ ॥**

योऽसौ हृदये दीपवदनन्यप्रकाश्यः सर्वस्य प्रकाशकत्वेनावस्थितः परमात्मोपरतबाह्यप्रपञ्चः, स एव ध्येयः । हृदये चावस्थितो दर्शनश्रवणमननादिभिर्निदिध्यास्यतया यस्तत्रावस्थितस्तद्विषयत्वेनापास्तभेदां धारणां प्र[2]संख्यानादिकां धारयन्नुभयात्मकस्यापि ब्रह्मणः कैवल्यात्मकतयैव तत्रात्मानं धारयेद् बुधः प्रतिपन्नोभयात्मकान्तर्यामिरूपब्रह्मस्वरूपः परं ब्रह्मोपरतध्यातृध्येयात्मस्वरूपात्मनात्मानं तत्र धारयंस्तं चात्मन्यकलङ्कमभयमपुनरावृत्तम् अपरोक्षमानन्दमपास्ताखिलव्यपदेशं पश्येदित्यादिप्रपञ्चनीयम् ॥ १९२ ॥

प्रतिपन्नान्तर्यामिस्वरूपस्य योगसिद्धस्य परब्रह्मणो निदिध्यासनमुक्तं, तस्यैव त्वधिकारिणो[8] लक्षणं वाच्यमित्यत आह —

**अन्तर्धानं स्मृतिः कान्तिर्दृष्टिः श्रोत्रज्ञता तथा ।**
**निजं शरीरमुत्सृज्य परकायप्रवेशनम् ॥ १९३ ॥**
**अर्थानां छन्दतः सृष्टिर्योगसिद्धेस्तु लक्षणम् ।**
**सिद्धे योगे त्यजन् देहममृतत्वाय कल्पते ॥ १९४ ॥**

अन्तर्धानं परैरनुपलभ्यत्वम् । स्मृतिः समाध्यवगतस्याविस्मरणं, नित्यं तथैवाव्यवधानेन प्रतिपत्तिरित्यर्थः । कान्तिरस्नानाद्यपगमः । दृष्टिर्भविष्यदादावव्याघातः । श्रोत्रग्राह्यत्वाच्छ्रोत्रं शब्दः, तदर्थज्ञत्वं श्रोत्रज्ञता । तथाशब्दाद् वेदानुसन्धानानपेक्षत्वेनेत्यर्थः । निजं च वैशेषिकमसाधारणंकर्मारभ्यं शरीरं निजतयैवासाधारणप्रत्ययग्राह्यत्वेनोत्सृज्य सदसद्रात्मकत्वेन प्रागुक्तविश्वरूपात्मकं[11]परकायप्रवेशनमेकत्वापत्तिः[12] । यत् पुनः शरीरतयैव परकायप्रवेशनं, तन्मन्त्रविद्यास्वप्यस्तीति नात्रोपयुज्यते इत्येवमेव व्याख्येयम् । अर्थानां महदहङ्कारादीनां छन्दतः इच्छातः सृष्टिर्विसर्ज-

१. 'यः, तत्राबहिर्विष' ङ. पाठः. २. 'ति' ङ. पाठः. ३. 'तैव', ४. 'यस्व', ५. 'त्र तु धा' ग. पाठः. ६. 'ति योजना' ङ. पाठः. ७. 'स्य प', ८. 'रल', ९. 'क्षिणेत्य' ग. पाठः. १०. 'ण' ङ. पाठः. ११. 'कं', १२. 'त्तिरित्यर्थः । य' ग. पाठः.

नमुत्पादनं वा । स्पष्टमन्यत् । एवञ्चान्तर्याम्यात्मना सिद्धे योगे त्यजंस्तथा परावरभावात्मकध्येयध्यातृव्यपदेशभाक्त्वेन देहं परं ब्रह्मरूपतया अमृतत्वायापुनरावृत्तये कल्पते घटत इत्यर्थः ॥ १९३, १९४ ॥

एवमेतत्प्राप्तिपर्यन्तं पारिव्राज्यमुक्तं विशुद्धसत्त्वानां तत्त्वविदाम् । यस्त्वत्र मनोवाक्कायिकानामन्यतमदोषेणासमर्थः, तं प्रतीममन्यं पारिव्राज्यप्रकारभेदमाह —

**अथवाप्यभ्यसन् वेदं न्यस्तकर्मा सुते वसन् ।**
**अयाचिताशी मितभुक् परां सिद्धिमवाप्नुयात् ॥ १९५ ॥**

ग्रन्थार्थरूपतया जपानुवचनादिना वेदमभ्यसन् परित्यक्ताग्निहोत्राद्यनुष्ठानोऽनुपलक्षितलिङ्गविशेषो भैक्षेणैव वर्तेत । अथवा तदशक्तावयाचिताशी अष्टग्रासादिना मितभुक् पुत्रगृहादौ वसेत् । एवमपि परां सिद्धिं प्राप्त्युपायलक्षणां(?) ब्रह्मत्वं प्राप्नुयादिति ॥ १९५ ॥

यद्यपि पारिव्राज्यमधिकृत्यायं मुक्त्युपदेशः, तथाप्याश्रमस्यातन्त्रतैव, यदृच्छया प्रचारमात्रव्युदासहेतुत्वादपवर्गस्य च ज्ञानैकसाध्यत्वात् । यतश्चैतदेवमतः —

**न्यायार्जितधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ।**
**श्राद्धकृत् सत्यवादी च गृहस्थोऽपि विमुच्यते ॥ १९६ ॥**

श्राद्धशब्दः समस्तगृहस्थधर्मोपलक्षणार्थः । स्पष्टमन्यत् ॥ १९६ ॥

इति यतिधर्मप्रकरणम् ।

---

### अथ प्रायश्चित्तधर्मप्रकरणम् ।

एवं प्रत्यात्मिकान् सर्वाश्रमाणां साधारणांश्च धर्मानभिधायेदानीं नैमित्तिकान् दोषनिर्घातार्थान् प्रायश्चित्तात्मकान् धर्मानुपदिदिक्षुः प्रतिषेधातिक्रमहेतुकं दोषमेवादौ प्रपञ्चयितुमाह —

**महापातकजान् घोरान् नरकान् प्राप्य गर्हितान् ।**
**कर्मक्षयात् प्रजायन्ते महापातकिनस्त्विह ॥ १९७ ॥**

---

१. 'ब्रह्मरू', २. 'मनन्यं', ३. 'नोप', ४, 'त्वप्राप्तिमवाप्नु' ग. पाठः.

महापातकमुपपातकं वा कृत्वा प्रायश्चित्तमकृत्वा ये म्रियन्ते, ते तन्निमित्तप्रभवान् घोरान् यमलोकसंबन्धिनस्तामिस्रादीनेकविंशतिनरकानतिशयेन गर्हितानेकद्वित्रिसामस्त्यादिनानुभूय तीव्रकर्मफलोपभोगेन क्षीणे पुनस्तदवशिष्टोपभोगायेह वक्ष्यमाणप्रकारेण महापातकिनो जायन्ते इति व्याख्येयम्। यदितु कृत्स्नकर्मक्षयादेवेति व्याख्यायेत, ततो महापातकिनस्त्विहेत्यसंबद्धं स्यात् । अतः कर्मक्षयादित्येवं व्याख्येयम् ॥ १९७ ॥

तत्र नरकान् वक्ष्यति । यथा त्विह जायन्ते तथा प्रपञ्चयति —

**श्वसूकरमृगोष्ट्राणां ब्रह्महा याति योनिषु ।**
**खरपुल्कसवेनानां सुरापो नात्र संशयः ॥ १९८ ॥**
**कृमिकीटपतङ्गत्वं स्वर्णहारी समाप्नुयात् ।**
**तृणगुल्मलतात्वं च क्रमशो गुरुतल्पगः ॥ १९९ ॥**

श्वादयः प्रसिद्धाः । सूकरश्चात्र ग्राम्यः श्वसन्निधानात् । मृगशब्दोऽपि प्रक्रमानुसारात् सृगालादिषु द्रष्टव्यः । उदाहरणार्थत्वाच्चोपन्यासस्य नात्रातीव स्मृत्यन्तरैः सह विषयविभागाय यतितव्यम् । महापातकजान् घोरान् नरकान् प्राप्येति चोपक्रमात् कामकृतमहापातकादिविषयोऽयं प्रपञ्चो वेदितव्यः । घोरगर्हितकर्मजन्यतया कारणानुरूप्येण कार्यसंबन्धविशेषस्यार्थवत्त्वात् । इतरथा तु नरकशब्दादेव तत्सिद्धेर्निष्प्रयोजनत्वं स्यात् । ततश्च स्मृत्यन्तरेष्वप्येवमेव व्याख्येयम् । तथाचाम्नायः — "सह तत एव प्राक् प्रवव्राज" इत्युपक्रम्य "इत्थं वा इमेऽमुष्मिन् लोके सचन्ते तान् वयमिह प्रतिसचामहे" इति कामकृत एव यातनां दर्शयति । तथाच व्यासः —

"कामकारकृतं पापं नरकेषूपभुज्यते ।
इहैव प्राप्नुयुः क्लेशानकामकृतपातकाः ॥"

इति । अतो यद्यपि स्मृत्यन्तरेषु अकामकृतेऽपि किञ्चिद्यातनातिशयवचनं स्यात्, तथाप्यत्यन्तवर्जनार्थं निन्दापरत्वेन व्याख्येयम् । खरपुल्कसवेनानां

१. 'न्धिविषयस्या', २. 'वायं प्रपञ्चो व्या', ३. 'यः', ४. 'द' ग· पाठ·.

सुरापो नात्र संशयः इत्यसंशयवचनं निन्दार्थवादाशङ्कानिवृत्त्यर्थम् । खरशब्दश्च गर्दभादिसदृशतिर्यग्योन्युपलक्षणार्थः । पुल्कसः क्षत्रियायां शूद्राज्जातः । वेनो नटः । कृमिकीटादित्वं च स्वर्णहारी समाप्नुयात् । संशब्दोऽतिशयदुःखप्रतिपत्त्यर्थः । तृणादिकांश्चानेकविधान् स्थावरभावान् गुरुतल्पगः प्राप्नुयात् । क्रमश इति वदन्नेकेनैव निमित्तेनानेकविधानेकजन्मप्राप्यं क्लेशसंबन्धं दर्शयति । स्पष्टमन्यत् ॥ १९८,१९९ ॥

एवं क्रमशस्तिर्यग्योनित्वमनुभूय ततश्चातुर्वर्ण्यविषये जायन्ते । तत्रापि तु—

**ब्रह्महा क्षयरोगी स्यात् सुरापः श्यावदन्तकः ।**
**हेमहारी तु कुनखो दुश्चर्मा गुरुतल्पगः ॥ २०० ॥**

क्षयो राजयक्ष्मा । श्यावदन्तादयः स्पष्टाः । दौश्चर्म्यं च स्त्रीणामपि यथासंभवं द्रष्टव्यम् । अकामकृतेऽपि च पापे यः प्रायश्चित्तं समर्थः सन् न कुर्यात्, तस्याप्येता नरकयातनाः स्वकर्मानुरूप्येण द्रष्टव्याः । क्षयरोगादीनि च लिङ्गान्यशक्त्याप्यकृतप्रायश्चित्तानां भवन्त्येव । तथाच

"इह दुश्चरितैः केचित् केचित् पूर्वकृतैस्तथा ।
प्राप्नुवन्ति दुरात्मानो नरा रूपविपर्ययम् ॥"

इति । इह दुश्चरितैरिति वचनादिहापि जन्मनि दुश्चरितैः प्रायश्चित्तैः पूर्वजन्मकृतैश्चाचरितप्रायश्चित्तैः तथाशब्दान्नरकाद्युपभोगान्ते कथञ्चिन्निमित्तान्तरादकृतप्रायश्चित्ताः सन्तो दुराचारात्मानो विरूपकशरीराः सन्तः स्वाभाविकशुक्लदन्तादिविपर्ययं श्यावदन्तादिकं प्राप्नुवन्तीत्यर्थः ॥ २०० ॥

एवं तावच्चतुर्णां महापातकिनामुक्तं, तत्संपर्के तु—

**यो येन संपिबत्येषां स तल्लिङ्गोऽभिजायते ।**

येषां पतितानां यो येन संपिबति स तदीयेनैव क्षयरोगादिना लिङ्गेन व्यस्तसमस्ततया संसर्गानुरूप्येण जायत इत्यर्थः । अभिशब्दाच्च तदभिजनत्वेन क्षयरोगादियुक्तयोरेव पित्रोः तदनुरूपलिङ्गो जायत इति द्रष्ट-

१. 'तु सु', २. 'तु', ३ 'नि लि' ग. पाठः. ४. 'श्चिद्वा निमि', ५. 'राः स्वा' ङ पाठः. ६. 'षां चतुर्णां प' ग. पाठ.

व्यम् । यदि तु स तल्लिङ्गेऽभिजायते इति पाठस्तदा स्वयमनेवंलिङ्गत्वेऽपि यो यल्लिङ्गे कुले जायते स तथाभूतपतितसंसृष्ट इत्यवगन्तव्यम् । अतश्च तैरपि प्रायश्चित्तं कर्तव्यमेवे[1]त्युत्तरत्रापि योज्यम् ॥

महापातकव्यतिरेकेणापि[2] रूपविपर्यया भवन्त्येवेत्येतत् प्रपञ्चयितुं चौर्यविषये[3] तावद् दर्शयितु[4]माह —

**अन्नहर्तामयावी स्यान्मूको वागपहारकः ॥ २०१ ॥**
**धान्यमिश्रयतिरिक्ताङ्गः पिशुनः पूतिनासिकः ।**
**तैलहृत् तैलपायी स्यात् पूतिवक्त्रस्तु सूचकः ॥२०२॥**

आमयावित्वं तु मन्दाग्निता । वागपहारकः यो गरादि दत्त्वा कुवैद्यतया वा मिथ्योपचारेण वाचमपहरति । अधीत्य वापलापः अनभ्यनुज्ञाताध्ययनं च वागपहार इत्यन्ये । तत्तु ब्रह्मस्तेयमुच्यते न वागपहरणम् । यथाह मनुः —

"ब्रह्म यस्त्वननुज्ञातमधीयानादवाप्नुयात् ।
स ब्रह्मस्तेयसंयुक्तो नरकं प्रतिपद्यते ॥"

इति । विक्रयाद्यर्थं धान्यस्यान्यमिश्री धान्यमिश्री । पिशुनः परगुणापहारी । पूतिनासिकः कुथितनासिकः । तैलहृत् तैलमात्रस्य हर्ता । तैलपायी कीटविशेषः । पूतिवक्त्रः कुथितमुखः । सूचकः परस्यार्थलाभादिप्रसङ्गे तद्विनाशाय वाग्दोषोद्भावकः । स्पष्टमन्यत् ॥ २०१, २०२ ॥

तथा —

**परस्य योषितं हृत्वा ब्रह्मस्वमपहृत्य च ।**
**अरण्ये निर्जले देशे जायते ब्रह्मराक्षसः ॥ २०३ ॥**

परस्योत्कृष्टस्य जातितो गुणतो वा योषितं स्त्रीत्वेनोपभोग्यां ब्रह्मस्वं च ब्राह्मणद्रव्यं ज्ञातिं वापहृत्य ब्रह्मराक्षसो भवतीति व्याख्येयम् । ब्रह्मणा वेदात्मके[5]नाधिकल्पेनान्तर्बहिश्च दह्यमानोऽत्यन्तयातनाशरी[6]रो ब्रह्मराक्षसः । वेदाध्यायिन एवैतद् ब्रह्मराक्षसत्वं सामर्थ्याद् द्रष्टव्यम् । अतश्च श्रुताध्य-

१. 'मित्येवमुत्त', २. 'पितु रू', ३. 'शेषे ता', ४. 'यति—अ', ५. 'कत्वेना' ङ. पाठः. ६. 'री' ग. पाठः.

यनसम्पन्नेनापि परस्योत्कृष्टस्य भार्या नोपगन्तव्या । तथाचाम्नायः —
"तस्मादेवंविच्छ्रोत्रियस्य जाययोपहासं नेच्छेद् उत ह्येवंवित् पराभवती"ति। तथा "स वा एष निरिन्द्रियो[1] निर्वीर्यः क्षीणसमस्तसुकृतश्च म्रियते-तस्य किमन्यदीदृशाद् ब्रह्मराक्षसत्वाद् भवेदि"ति । अतः सूक्तमरण्ये निरुदके ब्रह्मराक्षसो जायत इति ॥ २०३ ॥

**हीनजातौ प्रजायन्ते रत्नानामपहारकाः ।**
**पत्रं शाकं शिखी हृत्वा गन्धाञ्छुच्छुन्दरी शुभान् ॥**

मानवे तु —

"मणिमुक्ताप्रवालानि हृत्वा लोभेन मानवाः ।
विविधानि च रत्नानि जायन्ते हेमकर्तृषु ॥"

इति स्वर्णकारित्वं दर्शितम् । इह तु हीनजाताविति । तद् मनुवचनस्यान्त्यलक्षणार्थत्वादविरुद्धं, स्वर्णकारजातेर्वा[2]त्यन्तनिकृष्टत्वप्रतिपत्त्यर्थम् । स्पष्टमन्यत् ॥ २०४ ॥

**मूषिको धान्यहारी स्याद् यानमुष्ट्रः फलं कपिः ।**
**अजः पशुं पयः काको गृहकार उपस्करम् ॥ २०५ ॥**

यानं गन्त्र्यादि । फलमाम्रादिकम् । पशवोऽश्वादयः । पयो दुग्धम् । गृहकारो मृत्तिकासूकरिकः । स्पष्टमन्यत् ॥ २०५ ॥

**मधु दंशः पलं गृध्रो गां गोधाग्निं बकस्तथा ।**
**श्वित्री वस्त्रं श्वा रसं तु चीरी लवणमेव च ॥ २०६ ॥**

मधु माक्षिकं मद्यं वा । पलं मांसम् । गामिति चात्र स्त्री[3] प्रत्येतव्या, पशुग्रहणेनैव गोमात्रस्योक्तत्वात् । तथाशब्दोऽत्र संस्कृतौपासनादिप्रकारभेदेनाग्निहरणेऽनेकविधबकादिजा[4]तिप्रतिपत्त्यर्थः । तथोत्तरत्रापि वस्त्रगतरक्तादिप्रकारभेदानुरूप्येण श्वित्रस्य रक्तशुक्लादिभेदप्रतिपत्त्यर्थः । श्वा

१. 'यो विमुक्तकृद् अस्माल्लोकात् प्रैतीति यश्चैवभूतो निरिन्द्रियो नि', २. 'र्वाप्यत्यस्य' ग. पाठः, ३. 'स्त्री गौः प्र' ग. पाठः ४. 'तिपक्षिप्र' ङ. पाठः.

प्रसिद्धः । अरसमिति वा, तुल्यत्वात् संहितायाः । नीरसं पर्युषितादि हृत्वा श्वयोनिं प्राप्नुयात् । तुशब्दोऽवधारणार्थः । आदरार्थं चैतत् । यत्र पर्युषितादिहरणेऽपि श्वा भवति तत्राभ्यधिकहरणे न विघ्नः किं भविष्यतीति प्रदर्शयितुम् । चीरी नाम निदाघकालेऽटवीषु वाश्यते कीटविशेषः ॥२०६॥

इदानीमुपसंहरति —

**प्रदर्शनार्थमेतत् तु मयोक्तं स्तेयकर्मणि ।**
**द्रव्यप्रकारा हि यथा तथैव प्राणिजातयः ॥२०७॥**

स्तेयकर्मणीत्युपलक्षणार्थम् । सर्वत्र वधकर्मण्यभक्ष्यकर्मणि परदाराभिगमनकर्मणि च स्वकर्मानुरूप्येण तिर्यग्योनिषु मानुष्ये[1] चानेकविधवैरूप्यव्याधिदारिद्र्यबन्धुवियोगादिर्वधबन्धनादिक्लेशश्च प्रपञ्चनीयः । एतदेव प्रपञ्चयति । ह्रियमाणद्रव्यप्रकारा हन्यमानप्राणिप्रकारा अभिगम्यमानपरदारादिप्रकाराश्च यथानेकविधाः[2], तथैव तदुपभोगायानेकविधप्राणिजातयोऽपि । अतः स्वकर्मानुरूप्येण प्रतिषिद्धसेवनाद् विहितानुष्ठानाद् अन्यत्रापि परिवित्त्यादौ निमित्ते प्रायश्चित्ताकरणात् तासु तासु दुःखोपभोगबहुलासु योनिषु उत्पादक्लेशादिप्राप्तिः प्रपञ्चनीया ॥ २०७ ॥

एतदेव स्पष्टयति —

**यथाकर्म निषेव्यैवं तिर्यक्त्वं कालपर्ययात् ।**
**जायन्ते लक्षणभ्रष्टा दरिद्राः पुरुषाधमाः ॥२०८॥**

पापकर्मणो विशेषानुरूप्येण नरकांस्तिर्यग्योनित्वं चानुभूय ततः कालपर्ययात् सत्पुरुषोचितलक्षणरहिता दरिद्राः पुरुषाधमाश्च जायन्ते, न तेषामुत्कर्षः सम्भवतीत्यभिप्रायः । अतोऽवश्यं तैरिहापि जन्मनि प्रायश्चित्तं चरितव्यम् । तथाच वसिष्ठेनोक्तं — "कुनखी कृच्छ्रं द्वादशरात्रं चरित्वात्मानमुद्धरेदि[3]"ति । अतोऽनेवंलिङ्गैरपि दरिद्रैः पुरुषाधमैश्च प्रायश्चित्तं कर्तव्यमेवेत्यभिप्रायः । यतश्च कौनख्यादिलक्षणयोगित्वमपि तिर्यग्योनिग्रहणादेव गृहीतं, ततश्च कालपर्ययात् तदप्यनुभूय तैर्लक्षणैः कौनख्यादिभिर्भ्रष्टाः सन्तो दरिद्राः पुरुषाधमाश्च जायन्ते । ततश्च प्रायश्चित्तं कर्तव्यमेवेत्यभिप्रायः ॥ २०८ ॥

---

१. 'ष्येषु चा' ङ. पाठः. २. 'धाः तदु', ३. 'त्वोद्धारयेदि' ग. पाठः.

ये पुनः कृत्वापि पापानि तदनुरूपप्रायश्चित्तानि सम्यगनुतिष्ठन्ति, तेषामपुण्यानुवृत्तिर्मनागपि यतो नास्ति —

**ततो निष्कल्मषीभूताः कुले महति भोगिनः ।**
**जायन्ते लक्षणोपेता धनधान्यसमन्विताः ॥ २०९ ॥**

स्पष्टार्थः श्लोकः । अन्ये तु तत एवाशुभकर्मोपभोगान्निष्कल्मषीभूता इति व्याचक्षते । तत्तु मन्दप्रयोजनं विपरीतार्थं चेति नादर्तव्यम् ॥ २०९ ॥

इदानीं यस्मिन् निमित्ते प्रायश्चित्त कर्तव्यं, तद् दर्शयति —

**विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।**
**अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥ २१० ॥**

विहितस्य स्मार्तस्य सन्ध्योपासनाष्टकादेः श्रौतस्य चाग्निहोत्रादेरननुष्ठानात् । निन्दितस्य च अर्थतः प्राप्तौ सत्यां प्रतिषिद्धस्य सेवनात् । अत एवच प्रतिषिद्धस्येति वक्तव्ये निन्दितस्येत्युक्तम् । अन्यथाहि शब्दप्राप्तस्यापि षोडशीग्रहणादेर्निषिद्धस्य सेवनात् पतनप्रसङ्गः स्यात् । इन्द्रियाणां चानिग्रहात् प्रायश्चित्ताकरणादित्यर्थः । नरग्रहणं सार्ववर्णिकत्वप्रदर्शनार्थम् । पतनमृच्छतीति[१] च पतनं प्रायश्चित्तार्हत्वमेवाभिप्रेतं न तु द्विजातिकर्मभ्यः, तस्य महापातकविषयत्वात् । तथाच मानवे "प्रायश्चित्तीयते नर" इति प्रायश्चित्तार्हत्वमेवोक्तम् । ननुच प्रायश्चित्ताकरणमपि विहिताननुष्ठानमेव, मैवं, दोषनिर्घातार्थं हि प्रायश्चित्तं, न त्वग्निहोत्रादिवन्नैमित्तिकमात्रम् । अतस्तदकरणाद् दोषनिर्घात एव न स्याद् न त्वभ्यधिकदोषत्वम् । अस्मिन्ननिग्रहाच्चेन्द्रियाणामिति वचने सति न केवलं दोषनिर्घातो न भवति, अतिरिक्तं च पतनकारणमापद्यते । अतश्च तथाविधस्य गुरुतरो दण्डः प्रायश्चित्तं च गुरुतरं यथा स्यादित्येवमर्थः प्रयत्नः । मानवेऽपिच —

"अकुर्वन् विहितं कर्म निन्दितं च समाचरन् ।
प्रसजंश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः ॥"

इति प्रायश्चित्ताकरणमेवेन्द्रियार्थप्रसजनं व्याख्येयम् । यदि त्वविहिता-

१. 'त्रिक', २. 'ति प' ग. पाठः,

प्रतिषिद्धविषयाभिप्रायेणातिप्रसङ्गनिवृत्त्यर्थं प्रसजंश्चेन्द्रियार्थेषु इत्युच्येत, ततः,

"धर्ममर्थं च कामं च यथाशक्ति न हापयेत्"

इत्यनेन विरोधः स्यात्, "कामात्मता न प्रशस्ते"त्यनेनैवातिप्रसङ्गस्य निवारितत्वात् । अतः पूर्वैव व्याख्या ज्यायसी । स्पष्टमन्यत् ॥ २१० ॥

यस्माच्च विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् प्रायश्चित्ताकरणेन चेन्द्रियाणामनिग्रहाच्च गुरुतरप्रायश्चित्तार्हत्वेन पुरुषस्य पतनप्रसङ्गः —

**तस्मात् तेनेह कर्तव्यं प्रायश्चित्तं विशुद्धये ।**
**एवमस्यान्तरात्मा च लोकश्चैव प्रसीदति ॥ २११ ॥**

यस्मिन् निमित्ते सति प्रायश्चित्ताकरणात् पतनप्रसङ्गः, तस्मात् तेन निमित्तवता पुरुषेण यथाधिकारं रहस्यं वा वक्ष्यमाणेन रहस्यप्रायश्चित्तमार्गेण प्रकाशं वा प्रकाशप्रायश्चित्तप्रकारेण प्रायश्चित्तमात्मविशुद्ध्यर्थं लोकव्यवहारप्रसिद्ध्यर्थं चावश्यं कर्तव्यम् । इहेत्यानन्तर्यार्थम् । इहैव, निमित्तानन्तरकाल इत्यर्थः । एवञ्च सति अस्य पापकृतोऽन्तरात्मा रहस्यप्रायश्चित्तकरणाल्लोकश्च प्रकाशप्रायश्चित्तानुष्ठानात् प्रसीदति प्रसन्नो व्यवहारविषये भवतीत्यर्थः ॥ २११ ॥

इतश्च प्रायश्चित्तं नियोगतः कर्तव्यम् । यतः —

**प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् ।**
**कामतो व्यवहार्यस्तु वचनादिह जायते ॥ २१२ ॥**

प्रायश्चित्तैर्विशेषविहितैः प्रकाशरहस्यात्मकैर्निःशेषं पापं यस्मादबुद्धिपूर्वकृतं बुद्धिपूर्वकृतं वापगच्छति, तस्मात् प्रायश्चित्तान्यवश्यकर्तव्यानीति श्लोकस्य समस्तस्यार्थः । ननुच कामकृतं पापं नैव प्रायश्चित्तैरपगच्छति । यदिनाम वचनसामर्थ्यादिहानपगतेऽपि संव्यवहार्यत्वं भवति, भवतु । अत एवोक्तं — कामतो व्यवहार्यस्तु वचनादिह जायते इति । अस्मिँल्लोके संव्यवहार्यत्वं भवति, न तु पापमपैतीत्यभिप्रायः । तथाचाह मनुः —

"इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् ।
कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते ॥"

इति । तथा —

"अकामतः कृते पापे प्रायश्चित्तं विधीयते ।"

इति स्वाभिप्रायेणोक्तम् । तथा श्लोकोत्तरार्धेन परमतोपन्यासः कृतः ।

"कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनात् ॥"

इति । अन्यपरैर्वैदिकैरर्थवादैर्व्यामोहिताः केचित् कामकारकृतेऽपि प्रायश्चित्तमाहुः, न तु तन्ममाभिप्रेतमिति भगवतोऽभिप्रायः । तथाच स्मृत्यन्तरेष्वप्येवंविधान्येव वचनानि वासिष्ठादिषु "अनभिसन्धिकृते प्रायश्चित्तमपराधे" इत्येवमादीनि । अतः स्वमतिपरिकल्पितमिदं कामकारकृतेऽपि प्रायश्चित्तात् पापापगम इति । कथं तर्ह्ययं श्लोकः —

"एनस्विभिरनिर्णिक्तैर्नार्थं किञ्चित् समाचरेत् "

इति । अस्याप्ययमेवार्थः—यावत् प्रायश्चित्तं न कुर्वन्त्येनस्विनः, तावत् तैः सह न कश्चिद् व्यवहारः कार्यः । अत एव चोक्तं —

"कृतनिर्णेजनांश्चैनान् न जुगुप्सेत कर्हिचित् "

इति । एतदुक्तं भवति — यद्यपि कामकृतं पापं प्रायश्चित्तैर्नापगच्छति, तथाप्येनान् कृतप्रायश्चित्तान् व्यवहारविषये न मनागपि जुगुप्सेतेति । अन्यथा ह्यनिर्णिक्तैर्नाचरेदित्युक्ते सामर्थ्यात् कृतनिर्णेजनैः सहाचरणं प्राप्नोत्येव । तत्र कृतनिर्णेजनांश्चैनानित्येतदनारभ्यमेव स्यात् । तस्मात् कामकृते संव्यहार्यत्वमात्रं न पापापगमः । किञ्च यः प्रतिषेधं दृष्ट्वा तदतिक्रमेण प्रवर्तते, स नरकाद्युपभोगमङ्गीकृत्यैव प्रवर्तते । ततश्च तं प्रति प्रायश्चित्तं पापक्षपणार्थत्वेनानपेक्षितत्वाददृष्टार्थं स्यात् । अतो व्याख्येयमेतत् कामतो व्यवहार्यस्त्विति । अत्रोच्यते — प्रायश्चित्तं तावद् दोषवति निमित्ते विधीयमानं फलान्तरानुपपत्तेर्दोषनिर्घातार्थमेव प्रतीयते । तत्र निमित्तगतः श्रूयमाणोऽपि विशेषो "यस्योभयं हविरार्तिमार्छेदि"तिवदविवक्षितः । तेनोभयत्राविशेषेणैव ब्रह्महत्यादौ प्रायश्चित्तोपदेशः । यत्तु —

---

१. 'स्यायमर्थः', २. 'स्वाद' ग. पाठः.

"कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते"

इति । तन्निन्दार्थं मरणान्तिकप्रायश्चित्तार्थं वा न तु प्रायश्चित्तनिवृत्त्यर्थं, पूर्वार्धेनैव सिद्धत्वात् तथा सत्यानर्थक्यप्रसङ्गः स्यात् । अत एव च कामकृतेऽपि जीवप्रायश्चित्तसिद्ध्यर्थं कामतो व्यवहार्यस्त्वित्यत्रोक्तम् । नन्वत्र व्यवहार्यत्वमिह लोके वचनात् स्यादित्युक्तं, पापं त्वज्ञानकृतमेवापैति नेतरदपीति । नैतद्युक्तं, श्रुतिविरोधात् । यथोक्तम् — "इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत् तमश्लीला वागभ्यावदत् स प्रजापतिमुपाधावत् तस्मादेतदुपहव्यं प्रायच्छदि"त्युपक्रम्य "अभिशस्यमानं याजयेदि"त्युक्तम् । अतश्चोपक्रमसामर्थ्यात् कामकृत एवैतद् विज्ञायते । तथा "एतेन हेन्द्रो दैवापः शौनको जनमेजयं पारीक्षितं याजयाञ्चकारे"त्युपक्रम्य "सर्वां ह वै पापकृत्यां तत् सर्वां ब्रह्महत्यामपहन्ति योऽश्वमेधेन यजत" इति । सर्वग्रहणात् कामकृत एवाश्वमेधो विज्ञायते । अतः पापापनुत्तये प्रायश्चित्तं कर्तव्यं न संव्यवहार्यत्वसिद्ध्यर्थम् । तथाचानन्तरमेवोक्तम् । "पारीक्षिता यजमाना अश्वमेधैः परावरमजहुः कर्म पापकं पुण्याः पुण्येन कर्मणे"ति पापापनोदनत्वं दर्शयति । पुण्याः पुण्येन कर्मणेत्यपुण्यमूलोच्छित्तिमेव स्पष्टयति । अतः प्रत्यक्षश्रुत्यानुगुण्येनैव स्मृतिव्याख्यानं युक्तम् । तथाच मनुः —

"अकामतः कृतं पापं वेदाभ्यासेन शुध्यति ।"

इत्युक्त्वा

"कामतस्तु कृतं मोहात् प्रायश्चित्तैः पृथग्विधैः ।"

इति । मोहश्चात्रावलिप्ततया श्रुतिस्मृत्योरनादरोऽभिप्रेतो न तून्मादादिलक्षणः, तथाविधस्योन्मत्तादेः कामकृताकामकृतयोरविशेषात् । यो हि प्रत्यक्षादिविषये सम्यग्वर्तमानः शास्त्रार्थं च जानन्नपि नास्तिक्येनातिशयसान्दृष्टिकविषयाभिलाषेण चोदितो मोहाच्छास्त्रमसमञ्जसं मन्यते, तस्य तत्कामतो मोहात् कृतं पापं प्रायश्चित्तैः पृथग्विधैरत्यन्तगुरुभिरपगच्छती-

१. 'त्कमेव । न' ग. पाठ॰. २ 'न्द्रोऽतो दै', ३. 'त्यां, येऽन्तत्' ङ.' •तान्' ग. पाठः. ४. 'त्तं न' ङ. पाठ॰. ५. 'त्समं म' ग. पाठः.

त्यभिप्रायः । ततश्च कामकृतब्रह्महत्यादौ मरणान्तिकैरेव प्रायश्चित्तैरपनोदनप्रसक्तावाचार्येणोक्तं — कामतोऽपि पापं कृत्वाप्रत्यक्षश्रुतिवचनादिहैव जन्मन्यश्वमेधादिभिः पापं निर्णिज्य व्यवहार्यत्वं जायत इति । किञ्च — यदि प्रायश्चित्तात् संव्यवहार्यत्वमात्रमेव स्याद् न दोषनिर्घातः, ततो येन सकृत् कृतं प्रायश्चित्तं, स पुनः कृत्वापि ब्रह्महत्यामसंव्यवहार्यो न स्यात् । यदि प्रायश्चित्तं दोषापघातार्थं भवेत्, ततः कृतप्रायश्चित्तस्यापि पुनर्दोषोत्पत्तेस्तन्निर्घाताय प्रायश्चित्तं प्रसज्येत । यदा तु कृतप्रायश्चित्ततैव संव्यवहार्यत्वे हेतुः, तदा सकृत्कृतेऽपि कृतप्रायश्चित्तताया यावज्जीवमनपगमात् किमित्यसंव्यवहार्यः स्यात् । अथोच्येत — अपापापनोदकत्वेऽपि प्रायश्चित्तस्य नैमित्तिकत्वात् पुनरपि निमित्तोत्पादे सति प्रसज्यत इति । तदयुक्तं, नैवेदं "भिन्ने जुहोती"तिवद् ब्रह्महत्यादौ निमित्ते नैमित्तिकं प्रायश्चित्तं, किंतर्हि असंव्यवहार्यत्वेऽपि सति संव्यवहार्यत्वार्थम् । तत्र च यद्ययं वचनार्थः— यो ब्रह्महत्यादि कुर्यात्, तमकृतप्रायश्चित्तं न संपिबेदिति । ततो येन सकृत्कृतं तस्यामरणं कृतप्रायश्चित्तत्वमस्त्येवेति नासंव्यवहार्यत्वं स्यात् । अथ यदा यदा ब्रह्महत्या भवति, तदा तदा प्रायश्चित्ते कृते संव्यवहार्यत्वमिति । तथा सति कालार्थः संयोगः स्यात् । ततश्च यदि कथञ्चिद्धननानन्तरं न कृतं ततः कालस्यापगतत्वादुदितसन्ध्योपासनादिवन्न कश्चिदुपकारः स्यात् । यदि च नैमित्तिकं प्रायश्चित्तं न दोषनिर्घातार्थं, ततश्च यावन्ति प्रायश्चित्तान्युपादिश्यन्ते सर्वाणि तान्यविशेषात् कर्तव्यानि स्युः, विकल्पस्य विषयविभागस्य चाभावात् । दोषनिर्घातार्थत्वे हि सर्वप्रायश्चित्तानां समानकार्यत्वाद् युक्तो विकल्पः । विषयविभागकल्पना च युक्ता । तस्याकामकृतनैमित्तिकत्वे तु प्रयोजनान्तराभावादसत्येकस्मिन् कार्यविकल्पो निष्प्रमाणकः स्यात् । यत्रापि चशब्दोक्त एव वाशब्दाद् विकल्प : यथा —

"हविष्यभुग् वानुसरेत् प्रतिस्रोतः सरस्वतीम् ।"

---

१. 'हि', २. 'त्त्व', ३. कमात्रप्रा', ४. 'त्र य', ५. 'णात् सं' ग. पाठः।

इत्यादौ, तत्रापि यः कश्चिदनियमेनैकः कल्पः स्यात् । न चात्र गुरुतरकल्पस्यानर्थक्यप्रसङ्गाद् विषयविभागकल्पना युक्ता, तस्याकामकृते दोषनिर्घातार्थत्वेन तद्विशेषार्थत्वसिद्धेः । अथोच्येत — पतितस्यानधिकृतस्य द्विजातिकर्मस्वधिकारसञ्जननार्थानि प्रायश्चित्तानीत्यस्त्येवैककार्यत्वं तेषाम्, अतश्चात्राप्युपपद्यत एव विषयकल्पनेति । तदप्ययुक्तं, पूर्वोक्तदोषप्रसङ्गादेव । किञ्चाधिकारार्थत्वेऽपि कर्तुरयोग्यत्वव्यावृत्तिं योग्यतां वा प्रायश्चित्तं कुर्यात् । तत्रायोग्यत्वं तावद् ब्रह्महत्यादिनिमित्तम् । तच्च तज्जनितदोषवत्तया कर्तृत्वमात्रेण वा स्यात् । यदि च वधकर्तृत्वमात्रं तत् क्रियानन्तरमेव प्रलीनमिति न तद्व्यावृत्त्या प्रयोजनमस्ति । अथ तूत्तरकालेऽप्यस्ति, तत् प्रायश्चित्तसहस्रेणाप्यशक्यमपनेतुम्, अथ तु दोषवत्तात्मकमयोग्यत्वं, ततः तदुपाकरणद्वारेण शक्या योग्यता कर्तुमिति दोषनिर्घातार्थमेव प्रायश्चित्तं स्यात् । अथ प्रायश्चित्तेनान्यदपूर्वं योग्यत्वं जन्यते न तु दोषवत्तात्मकमयोग्यत्वमपनीयत इत्युच्येत, तथा सत्यन्वारम्भणीयावत् सकृदेव करणं स्यात्, कर्माङ्गता च प्रायश्चित्तानां प्रसज्येत, अत्रापि क्रतूपकारकत्वं तादर्थ्यं च प्रमाणशून्यं कल्प्यं स्यात् । यदि च कामकृतेऽधिकारमात्रार्थतोच्येत, ततो मरणान्तिकं प्रायश्चित्तम् अकामकृत एव स्याद्, जीवप्रायश्चित्तान्येव कामकृते स्युः, मृतस्याधिकारासंभवात्, संव्यवहार्यत्वं हि जीवत एवापेक्षितं यतः । तत्रैवमादीनि वचनान्यसंबन्धानि स्युः । यथापस्तम्बेन "अस्यास्मिन् लोके प्रत्यापत्तिर्विद्यते कल्मषं तु निर्हण्यते" तथा —

"मतिपूर्वमनिर्देश्यं प्राणान्तिकमिति स्थितिः ।"

इत्यज्ञातविषये च विषयोपदेशः । यथा "सुरायाश्चाज्ञाने तप्तकृच्छ्रं" इति वासिष्ठे तथा —

"अज्ञानाद् वारुणीं पीत्वा संस्कारेणैव शुध्यति ।"

इति । एवं सर्वस्मृतिष्वेवंजातीयकानामसामञ्जस्यं स्यात् । रहस्ये च प्रायश्चित्तं न स्यात् । अत एवमयं याज्ञवल्कीयश्लोको व्याख्यातव्यः — यथैव प्रायश्चित्तवचनादज्ञातेऽपि प्रतिषिद्धकर्मणि पापं भवति, तच्च प्रायश्चित्तैरपैति, एवमेव कामतोऽपि कृते पापे न मरणान्तिकमेव प्राय-

श्चित्तम्, अपितु "तराति सर्वं पाप्मानमि"त्यादिवचनादिहैव संव्यवहार्यो निष्कल्मषो जायते इत्यलं प्रसङ्गेन ॥ २१६ ॥

एतदेवानन्तरश्लोकेन स्पष्टयति —

**प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः ।**
**अपश्चात्तापिनः कष्टान् नरकान् यान्ति दारुणान् ॥२१७॥**

ये हि कामतः प्रवर्तन्ते, प्रवृत्तिकाले नितरां पापेषु रतिं बध्नन्ति, ते पापेषु रताः सन्तो यद्यपश्चात्तापिनः स्युः, ततः प्रायश्चित्तान्यकुर्वाणाः कष्टान् दुस्सहान् नरकान् प्रतिपद्यन्ते । कष्टवचनात् सिद्धेऽपि पुनर्दारुणानित्यतिशयनिन्दार्थम् । ये त्वकामात् कथञ्चित् पापं कुर्युः, ते नियोगतः पश्चात्तापिनो भवन्त्येव । न च तेषां पापनिरतत्वम् । ते यद्यपि प्रायश्चित्तं न कुर्युः, तथाप्यस्मिन्नेव मनुष्यलोके यातनां प्राप्नुयुरस्मिन्नेव जन्मनि जन्मान्तरे वा, न तु यमलोकसंबन्धिषु[1] तामिस्रादिष्वित्येतत् पुरस्तादप्युक्तमेव । तथाच मन्त्रवर्णः — "नो जिह्मायन्तो नरकं पताम[2]" इति । जिह्मायन्तः कौटिल्येन प्रवृत्ताः, कामकारप्रवृत्ता इति यावत् । अतश्चाकामकृते नैव नरकप्राप्तिः । तथाच व्यासः —

"कामकारकृतं पापं नरकेषूपभुज्यते ।
इहैव प्राप्नुयुः क्लेशानकामकृतपातकाः ॥"

इति । अतश्च दोषनिर्घातार्थत्वात् प्रायश्चित्तस्य तदकरणे कष्टतरनरकप्राप्तिरुपपन्ना ॥ २१७ ॥

तानिदानीं नरकान् दर्शयति —

**तामिस्रं लोहशङ्कुश्च महानिरयशाल्मली ।**
**रौरवं कुड्मलं पूतिमृत्तिकं कालसूत्रकम् ॥ २१८ ॥**
**संघातं लोहितोदं च सविषं संप्रतापनम् ।**
**महानरककाकोलं संजीवननदीपथम् ॥ २१९ ॥**
**अवीचिमन्धतामिस्रं कुम्भीपाकं तथैव च ।**
**असिपत्रवनं चैव तपनं चैकविंशकम् ॥ २२० ॥**

---

१. 'न' ब, पाठः. २. 'मेति' ड, च, पाठः.

अत्र द्वाभ्यां श्लोकाभ्यां षोडश नरकाः, तृतीयेन पञ्च । एवमेकविंशतिः । तामिस्रोऽत्यर्थं तमोबहुलः । लोहमयाः शङ्कवो यस्मिन् अनवरतं सर्वगात्रेषु निखन्यन्ते, स लोहशङ्कुः । महता रयेण वेगेन नितरां यत्राजस्रं क्षेपणं, स महानिरयः । ताम्रमया अग्निवर्णाः शल्मलिद्रुमाः कण्टकिनो यत्र परिष्वज्यन्ते, स शल्मलिः । यत्रास्थीनि भित्त्वा रुरुवत् तप्तानि लोहशृङ्गाण्युत्तिष्ठन्ति, स रौरवः । कुड्मलमित्यविकसितमुच्यते । तद्यथा पद्माद्यविकसितं पिण्डीभूतमास्ते, तद्वद् यत्र सर्वाङ्गानि संपिड्य कुड्मलीक्रियन्ते, (स) कुड्मलो नाम नरकः । पाठान्तरं च—रौरवं[1] कश्मलमिति, केशमलप्रायः । पूतिमृत्तिकः स्पष्टः । कृष्णसूत्रे प्रोता यत्रान्तरिक्षस्था धार्यन्ते, तच्च सूत्रं नित्यं चाल्यते, स कालसूत्रकः । यथैव द्वौ मुसलिनौ संहत्य तण्डुलाद्यवघातं कुरुतः, एवं यत्र संहन्यन्ते, स संघातः । सर्वेष्वूदककार्येषु लोहितं यत्र, स लोहितोदः । सविषाः फणिनोऽनवरतं यत्र भक्षयन्ति, स सविषः । प्रकर्षेणान्तर्बहिश्च तापनात् सम्प्रतापनम् । पाठान्तरं तु — ऋबीसं संप्रतापनम् इति । तत्रान्तरुदरे नित्यं गर्भस्थिताः पच्यन्ते यस्मिन्, स ऋबीसः । यमपेक्ष्यान्ये नरकाः कालसूत्रादयो लघवः, स महानरकः । लोहतुण्डैः काकोलूकैरहर्निशं तुद्यन्ते यत्र, स काकोलः । सञ्जीव्य संजीव्यानेकविधैः प्रकारैर्यत्र प्रमाप्यन्ते, स सञ्जीवनः । वैतरणी नाम नदी पूयप्रायोदका, सा पन्था यस्य नरकस्य, स नदीपथः । अधोमुखा गर्तायामङ्गारपूर्णायां निखाता दावाग्निना यत्रोपज्वाल्यन्ते, सोऽवीचिः । अन्धसर्पाः सन्तस्तमिस्रायामिव शकटैः सञ्चूर्ण्यन्ते यत्र, सोऽन्धतामिस्रः । कुम्भीपाकः स्पष्टः । खड्गधारावत् तीक्ष्णानि पत्राणि यस्मिन् तालवने, तस्मिन् कृष्यन्ते यत्र, सोऽसिपत्रवनः । प्रचण्डः सवितैव यत्र तपति, न त्वन्यानि महाभूतानि सन्ति, स तपनः ॥ २१८—२२० ॥

एवमेतानेकविंशतिनरकान् स्वकर्मानुरूप्येण —

**महापातकजैर्घोरैरुपपातकजैस्तथा ।**
**अन्विता यान्त्यचरितप्रायश्चित्ता नराधमाः ॥ २२१ ॥**

घोरग्रहणं कामकारप्रतिपत्त्यर्थम् । कामकृतमहापातकोपपातकजनितैः पापैरन्विता युक्ताः सन्तो ये प्रायश्चित्तं नाचरन्ति नास्तिक्यातिश-

---

1. 'कौ सं' ग. पाठः.

यात्, त एवैतान् नरकान् यान्ति, नत्वकामकृतपापा अपीत्यभिप्रायः। महापातकोपपातकतत्समातिदेशिकव्यतिरेकेणात्र कामकृतेऽपि नैव नरकप्राप्तिः, तिर्यक्त्वमेव तत्र। यथाह मनुः —

"यद्वा तद्वा परद्रव्यमपहृत्य बलान्नरः।
अवश्यं याति तिर्यक्त्वं जग्ध्वा चैवाहुतं हविः॥"

इति। बलात् कामकारादित्यर्थः॥ २२१॥

के पुनस्ते महापातकिन इत्यत आह —

**ब्रह्महा मद्यपः स्तेनस्तथैव गुरुतल्पगः।**
**एते महापातकिनो यश्चैतैः संपिबेत् समाम्॥ २२२॥**

यो ब्राह्मणं स्वातन्त्र्येण प्रयोजकत्वेन वा हन्ति घातयति वा, स ब्रह्महा। मद्यशब्दश्च पैष्ट्यां द्रष्टव्यः। स्तेनश्च ब्राह्मणसुवर्णस्तेनः। गुरुतल्पगस्त्वाचार्यस्य पितुर्वा भार्यां य उपगच्छति, स विज्ञेयः। तैश्च व्यस्तैः समस्तैर्वा संपिबेत् संगत्य भोजनपानाद्याचरेत्[1]। कियन्तं कालमित्यत आह — समां संवत्सरमित्यर्थः। तथाचाम्नायः —

"स्तेनो हिरण्यस्य सुरां पिबंश्च गुरोस्तल्पमावसन् ब्रह्महा च।
एते पतन्ति चत्वारः पञ्चमश्चाचरंस्तैः॥"

इति। हिरण्यशब्दश्च विशेषणान्तरादृते सुवर्ण एव प्रयुज्यते। स्थितमेतच्छान्दोग्ये। "हिरण्यमिति जातरूपं प्रतीयात् सर्वत्र" इति श्रुतिप्रस्थानमेवाङ्गीकृत्य सूत्रकारैरुक्तम्। तथाच चरकाः[3] — "आग्नेयो वै ब्राह्मणः आग्नेयं हिरण्यं तस्मादग्नये ब्राह्मणाय हिरण्यं दद्याद् यथाग्नय एवाग्नी(ग्ने? धे)हिरण्यं देयम्" इति प्रकृत्य "न सुवर्णं ब्राह्मणेभ्योऽपहर्तव्यं महद् वा एन एनमार्छति यो ब्राह्मणेभ्योऽपहृत्यावरुन्धत" इति। अतो ब्राह्मणसुवर्णहरणं स्तेयमत्राभिप्रेतम्। तथाच वसिष्ठ एते एव श्रुतिस्मृती उपसंहृत्य महापातकाधिकारे "ब्राह्मणसुवर्णहरणं चे"त्युक्तवान्। सुरां पिबंश्चेत्यत्रापि पैष्ट्येवाभिप्रेता। तस्यामेव मुख्यः सुराशब्दः, गौडी[4]प्रभृ-

---

१. 'नाद्या', २. 'स' ङ. पाठः. ३. 'का आहुः — आ' ङ. पाठः. ४. 'डी' च. पाठः.

तिषु तु मद्यसामान्याद् गौणः। ननुच "विज्ञेया त्रिविधा सुरा" इति सर्वासां मुख्यत्वम्। मैवं, नह्यनेकार्थत्वमसति प्रतिबन्धे न्याय्यम्। कथं निर्णय इति चेत्। पैष्ट्यामेव हि वेदे प्रयोगदर्शनाद् वाजपेये सौत्रामण्यां च सुराग्रहेषु। तथा अग्नीषोमीयब्राह्मणे चरकाणाम् "अथ यन्मल्यमासीत् तत् पश्चात्समदोहत् सुरा वै मल्यं यन्नामानृतं पाप्मा तमः सुरा" इत्येवं सुराशब्दः पैष्ट्यामेव प्रयुक्तः। तत्रैव चोपसंहारे "तस्माद् ब्राह्मणः सुरां न पिबेद्" इत्युक्तम्। अतः पैष्टीपान एव महापातकं नान्यत्रेति स्थितम्। गुरोस्तल्पमावसेदित्यत्रापि पितर्याचार्ये वा गुरुशब्दः, पितर्येव वा

"निषेकादीनि कर्माणि यः करोति यथाविधि।
संभावयति चान्नेन स विप्रो गुरुरुच्यते॥"

इति मनुवचनात्। पितृत्वोपचाराच्चाचार्ये गौणत्वमेव युक्तम्। यथोक्तं—

"तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते"

इति। एवमन्यत्रापि शब्दार्थविवेकः कार्यः। तथाचाचार्यान्यां वसिष्ठेन गुरुतल्पातिदेशः कृतः — "आचार्यपुत्रशिष्यभार्यासु चैवम्" इति। यत्तु नारदेनोक्तं —

"माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा।
पितृव्यसखिशिष्यिस्त्री भगिनी तत्सखी स्नुषा॥
दुहिता चार्यभार्या च सगोत्रा शरणागता।
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या॥
आसामन्यतमां गत्वा गुरुतल्पग उच्यते।
शिश्नस्योत्कर्तनात् तस्य नान्यो दण्डो विधीयते॥"

इति, तत्तु न्यायविरोधान्मनुविरोधाच्च दण्डसाम्यप्रतिपत्त्यर्थं न शब्दनियमायेत्यवगन्तव्यम्। यत्तु इहैव पितृष्वसां मातुलानीम् इत्यादि, तत् स्वावसरे वक्ष्यामः। ब्रह्महा चैते पतन्ति चत्वार इत्यत्र आततायिसंभ्रमव्यतिरेकेण यो ब्राह्मणमन्येनाप्रयुक्तः स्वातन्त्र्येण हन्याद् अन्यं वा द्रव्य-

---

१. 'सारं मा' च. पाठः.

दानादिना वशीकृत्य घातयति, स प्रत्येतव्यः । कुत एतत् । "आतताथिनं हत्वा नास्य प्राणानाच्छेत्तुः किल्बिषमाहुरि"ति वचनात् ।

तथा —

"स्वाध्यायिनं कुले जातं यो हन्यादाततायिनम् ।
न तेन भ्रूणहा भवति मन्युस्तं मन्युमृच्छति ॥"

इति । तथा —

"गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् ।
आततायिनमायान्तं हन्यादेवाविचारयन् ॥"

इति । आततायिनमायान्तमितिवचनात् संग्रामाभ्यनुज्ञाप्यत्रवै श्लोके । "अपि वेदान्तगं रणे" "जिघांसन्तं जिघांसीयाद्" इत्येवं संग्रामाधिकारे सर्वत्र स्मृतिष्वनुज्ञावचनानि सन्ति । यस्तु धनक्रीतः परप्रयुक्तो हन्यात्, तस्य स्वामिगामित्वात् क्रियाफलानामृत्विजामिव ब्रह्महत्याजन्यफलसम्बन्धो नास्त्येव । ननुच "ब्राह्मणो न हन्तव्य" इत्याम्नायवचनाद् धनादिक्रीतस्यापि ब्रह्महत्यास्त्येव । श्येनादिवदेतद् द्रष्टव्यम् । यथैव श्येनादिजन्ये वधे नर्त्विजां दोषः, तथात्रापि । यथाग्नीषोमीयवधे "न हिंस्यात् सर्वा भूतानी"ति ऋत्विजां प्रतिषेधो न भवति, तथात्रापि । अन्ये तु कुताश्चिदागमय्येमं श्लोकं पठन्ति —

"रागाद् द्वेषात् प्रमादाद् वा स्वतः परत एव वा ।
यो हन्याद् ब्राह्मणं कश्चित् स सर्वो ब्रह्महा भवेत् ॥"

इति । तत्त्वविज्ञातमूलत्वाद् विचार्यम् । यद्यपिच स्यात्, तथाप्यातिदेशिकत्वान्महापातकं तावन्न भवति । यथा — "सृष्टश्चेद् ब्राह्मणवधे हत्वापि राजन्यवैश्यौ चेजानावि"त्यादि । यथाच लोकयात्रिकाः पठन्ति—"अन्यायेन गृहीतस्वश्चे"त्यादि । "तमाहुर्ब्रह्मघातकमि"त्यघातकमपि वचनसामर्थ्याद् घातकमित्याहुः, एवं धनक्रीतादेरपि स्यात् । अतो य एव स्वयमनन्यप्रयुक्तः शस्त्रादिना परिक्रयादिभिर्वा हन्तारं स्वीकृत्य

१. 'नच' ग. पाठः.

ब्रह्माणं हन्ति घातयति वा, तस्यैव ब्रह्महाशब्देनात्र ग्रहणम् । ब्राह्मणसुवर्णस्तेनादयश्चत्वार इति पाठात् सिद्धेऽपि पुनःश्रुतिः पातकसंयोजकादिनिवृत्त्यर्था । तदेतदाचार्येणाप्युक्तं—एते महापातकिन इति । "पञ्चमश्चाचरंस्तैरि"त्यत्रापि तैरेव चतुर्भिः सहाचरणे महापातकित्वं न तु[1] तत्संसर्गिणोऽपि । पञ्चम इति चास्यैव दार्ढ्यार्थमुक्तम् ॥ २२२ ॥

इदानीं महापातकसमानि—

**गुरूणामत्यधिक्षेपो वेदनिन्दा सुहृद्वधः ।**
**ब्रह्महत्यासमं ह्येतदधीतस्य च नाशनम् ॥ २२३ ॥**

अत्र[2] च बहुवचनादाचार्यादयोऽपि सर्वे गुरवः प्रत्येतव्याः । तेषां महापातकित्वं युष्माकमस्तीत्येवंप्रकारोऽतिशयेनाधिक्षेपो[3]ऽत्यधिक्षेपः । तत्र च गुरुविशेषापेक्षया अधिक्षेपविशेषापेक्षया च प्रायश्चित्तकल्पना । नन्वगुरावपि "ब्राह्मणाभिशंसने दोषस्तावान्" "द्विरनेनसी"त्यस्त्येव पातकसमत्वम् । सत्यं, प्रायश्चित्तान्तरं तु तत्र । यथाह वसिष्ठः—

"ब्राह्मणमनृतेनाभिशस्य पतनीयेनोपपतनीयेन वा
मासमब्भक्षः शुद्धवतीरावर्तयेत्"

इति । अत्र तु ब्रह्महत्याप्रायश्चित्तमेव यथा स्यादित्यारम्भः । महापातकव्यतिरिक्ते[4] त्वधिक्षेपे[5] तदनुरूपमेव प्रायश्चित्तं वेदितव्यम् । वेदनिन्दा च हेतुशास्त्रावष्टम्भेन श्रुतिस्मृत्योर्बाधिता[6]न्तःकरणतयानुष्ठानपर्यन्तत्वेनानादरः । तथाचाह मनुः—

"योऽवमन्येत ते तूभे हेतुशास्त्राश्रयाद् द्विजः ।
स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ॥"

इति । सुहृद्वधस्त्वब्राह्मणविषयः, तस्य तत्समत्ववचनात् । अधीतनाशनं तु पित्राद्यधीतां शाखां नेयं शोभनेति कृत्वा तत्परित्यागः । अन्ये त्वधीतविस्मरणमेवाचक्षते । तत्त्वतिप्रसङ्गान्नातीव युक्तम् । मनुना तु सुरापानसमत्वेन—

1. 'तु संस' च. पाठः. २. 'त्र ब' ग. पाठः. ३. 'पोऽधि' च. पाठः, ४. 'क्तेषु त्व', ५ 'पेषु त' ग. पाठः. ६. 'र्बाधिता' च. पाठः.

"ब्रह्मोज्झो वेदनिन्दा च कौटसाक्ष्यं सुहृद्वधः ।
गर्हितानाद्ययोर्जग्धिः सुरापानसमानि षट् ॥"

इत्युक्तम् । अतश्च प्रायश्चित्तविकल्पः । अन्यत्राप्यनेकपाठे सत्येवमेव व्याख्येयम् । ननु वेदविरोधवन्मनुविरोधोऽपि स्मृत्यन्तराणां बाधनाय युक्तः । सत्यं, यदि विरोधः स्यात् । इह तु महापातकत्वाविशेषाद् ब्रह्महत्यातिदेशमध्ये सुहृद्वधस्य सुरापानसममध्यपठितस्य पुनः पाठादविरोध एव । विस्पष्टतरं त्वेतदुपरिष्टाद् वक्ष्यामः ॥ २२३ ॥

**निषिद्धभक्षणं जैह्म्यमुत्कर्षे च वचोऽनृतम् ।**
**रजस्वलामुखास्वादः सुरापानसमानि तु ॥ २२४ ॥**

निषिद्धस्य लशुनादेर्नास्तिक्यातिशयान्निषेधं जानत एव कामकारेण भक्षणम् । यथाह मनुः—

"छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम् ।
पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद् द्विजः ॥"

इति, विशेषाभिधानात् । अविशेषाभिधानेऽपि चैतान्येव गृह्यन्ते, अस्मादेव मनुवचनात् । जैह्म्यं तु कौटिल्यमुच्यते । तदपि यदि कश्चित् सुरापानादिप्रवृत्तं ब्राह्मणं निवारणसमर्थोऽपि कौटिल्येनोपेक्षते, स एवात्र प्रत्येतव्यः । यथाह गौतमः— "दुर्बलहिंसायां च विमोचने शक्तश्चेदि"-ति । हिंसावचनं तत्रोपलक्षणत्वेनैव द्रष्टव्यं सर्वत्रैव तु शक्तस्योपेक्षणे पातकातिदेशार्थम् । जातिभ्रंशकरमध्ये च जैह्म्यं मनुनोक्तम् । तदेतदुपरिष्टाद् वक्ष्यामः । उत्कर्षे च वचोऽनृतमिति । एतच्च मनुना ब्रह्महत्यासमत्वेनोक्तम् । तत्रैवं विवेकः —ब्रह्महत्याप्रसङ्गे यदनृतं तस्य तत्समत्वं, सुरापानप्रसङ्गे यदनृतं तस्य सुरापानसमत्वं, यथा कश्चित् पक्षपातादिना ब्रह्महणमेव स्वपक्षोत्कर्षार्थं नायमेवंविध इति ब्रूयाद् विपरीतं वा । एवमन्यत्रापि योज्यम् । रजस्वला चात्र सुरापी व्याख्येया नोदक्या, तस्या

१. 'ब्रा' ग. च. पाठः. २. 'त एव', ३. 'चावि' ग. पाठः, ४. 'यशस्य' क. च. पाठः,

उपगमनेऽप्यल्पदोषत्वाद्, उपगमनाङ्गत्वाच्च मुखास्वादस्य । प्रक्रमानुगुण्याच्चैतदेवं युक्तम् ॥ २२४ ॥

**अश्वरत्नमनुष्यस्त्रीभूधेनुहरणं तथा ।**
**निक्षेपस्य च सर्वं हि सुवर्णस्तेयसंमितम् ॥ २२५ ॥**

अश्वोऽत्र यज्ञसाधनभूतः प्राधान्येन वा संग्रामसाधनभूतः प्रत्येतव्यः । धेनुरपि यज्ञाङ्गभूतैव । त्रैवर्णिकाश्च मनुष्याः । स्त्री च ब्राह्मणपरिगृहीतैव । भूमिरपि ब्राह्मणसात्कृतैव, निक्षेपश्च । तथाशब्दो रजताद्यर्थः । तथाच मनुः —

"निक्षेपस्यापहरणं नराश्वरजतस्य च ।
भूमिवज्रमणीनां च रुक्मस्तेयसमं स्मृतम् ॥"

इति । पूर्वत्र स्तेयवचनं सुवर्णविषयमेवेति ज्ञापितम् । अतश्च निक्षेपः सुवर्णव्यतिरेकेणेति व्याख्येयम् ॥ २२५ ॥

**सखिभार्याकुमारीषु स्वयोनिष्वन्त्यजासु च ।**
**सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं विदुः ॥ २२६ ॥**

अन्त्यः शूद्रः तेन पूर्ववर्णेषु त्रिषु जाता अन्त्यजाः स्वयोनिष्विति च मातृपितृसंबन्धाः पितृष्वस्रीयादयो गृह्यन्ते । सुतास्त्रियश्चासवर्णाः, स्नुषाभगिन्योरुत्तरत्राम्नानात् । स्पष्टमन्यत् । मानवेऽपि च "रेतःसेकः स्वयोन्यास्वि"त्यत्र चकारद्वयसामर्थ्याद् सगोत्रोपादानं व्याख्येयम् ॥ २२६ ॥

प्रायश्चित्तातिरेकार्थं तु भेदेनाह —

**पितृष्वसां मातुलानीं स्नुषां मातृष्वसामपि ।**
**मातुः सपत्नीं भगिनीमाचार्यतनयां तथा ॥ २२७ ॥**
**आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ।**
**छित्त्वा लिङ्गं वधस्तस्य सकामायाश्च योषितः ॥२२८॥**

---

१. 'ग्रह एव' ग. च. पाठः. २. 'श्च । तथाच' च., 'श्च (तथाशब्दो) भूधेनुहरणं तथा निक्षेपस्य च, सर्वं हि सुवर्णस्तेयसताय' ग. पाठः. ३. 'ज्र', ४. 'वे च', ५. 'भि' ग. च. पाठः.

अत्र एवशब्दार्थे तुशब्दस्योत्कृष्य योजना गच्छन् गुरुतल्पग एवेति । एतदुक्तं भवति — युक्तं सखिभार्यादिषु समत्ववचनं पितृष्वस्रादिषु गुरुतल्पग एव, यथाभ्यर्हिते मन्त्रिणि किमयं राजसम इत्युच्यते ध्रुवमयं राजैवेति । एवञ्च वदता पितृष्वस्रादिषु गुरुतल्पान्न्यूनत्वं तत्समातिरेकश्च दर्शितो भवति । अन्ये तु मुख्यमेव गुरुतल्पं व्याचक्षते । (तद्युक्तं ?) तत्त्विह मातुरनुपादानाद् (अयुक्तम्) । स्मृत्यन्तरे च "ब्रह्महसुरापगुरुतल्पग" इत्युक्त्वा "मातृपितृयोनिसंबन्धाग" इत्युक्तं, "स्नुषायां गवि च तत्समोऽवकर इत्येके" इति च । तदसमञ्जसं स्याद्, अतः पूर्वैव व्याख्या ज्यायसी । मातुः सपत्नीति चासवर्णाभिप्रेता इतरासु तु गुरुतल्पसमत्वं मुख्यमेव यतः । स्पष्टमन्यत् ॥ २२७,२२८ ॥

इदानीमुपपातकान्युच्यन्ते —

**गोवधो व्रात्यता स्तेन्यमृणानां चानपक्रिया ।**
**अनाहिताग्नितापण्यविक्रयः परिविन्दनम् ॥ २२९॥**
**भृताद्ध्ययनादानं भृतकाध्यापनं तथा ।**
**पारदार्यं पारिवित्त्यं वार्धुष्यं लवणक्रिया ॥ २३० ॥**
**स्त्रीशूद्रविट्क्षत्रवधो निन्दितार्थोपजीवनम् ।**
**नास्तिक्यं व्रतलोपश्च सुतानां चैव विक्रयः ॥ २३१ ॥**
**धान्यरूप्यपशुस्तेयमयाज्यानां च याजनम् ।**
**पितृमातृसुहृत्त्यागस्तटाकारामविक्रयः ॥ २३२ ॥**
**कन्याया दूषणं चैव परिविन्दकयाजनम् ।**
**कन्याप्रदानं तस्यैव कौटिल्यं ब्रह्मलोपनम् ॥ २३३ ॥**
**आत्मार्थे च क्रियारम्भो मद्यपस्त्रीनिषेवणम् ।**
**स्वाध्यायाग्निसुतत्यागो बान्धवत्याग एव च ॥ २३४ ॥**
**इन्धनार्थं द्रुमच्छेदः स्त्रीहिंस्रौषधिजीवनम् ।**
**हिंस्रयन्त्रविधानं च व्यसनान्यात्मविक्रयः ॥ २३५ ॥**

१. 'ल्पसमो' ङ. च. पाठः,

**असच्छास्त्राधिगमनमाकरेष्वधिकारिता ।**
**भार्याविक्रयणं चैषामेकैकमुपपातकम् ॥ २३६ ॥**

एतेऽष्टौ श्लोका निगदोक्ताः । एकैकग्रहणं द्वित्राद्यनुष्ठाने प्रायश्चित्तगौरवार्थम् । उपपातकसंज्ञाप्येवमर्थैव, उपचयेनोपेत्य वा सेव्यमानं पातकमेव स्यादिति । अत एव गौतमेन पातकमध्ये निन्दितकर्माभ्यासो दर्शितः । एवमेतैरष्टाभिः श्लोकैरेकपञ्चाशदुपपातकान्युक्तानि । अन्यान्यपिच सूर्याभ्युदितः सूर्याभिनिर्मुक्त इत्यादीन्यत्रैव तथाशब्दादिगृहीतत्वेन द्रष्टव्यानि । अथवा प्रायश्चित्तसाम्यार्थं एषामिह पाठो न तूपपातकसंज्ञानियत्यर्थः । तथा शङ्खेनाष्टादशैवोपपातकान्युक्तानि । यथाह — "अत ऊर्ध्वमुपपतनीयानि — कन्यादूषी सोमविक्रयी वृषलीपतिः कौमारदारत्याग्यसुरामद्यपायी गोघ्नः शूद्रवधी गुरोः प्रतिहन्ता नास्तिकः कृतघ्नः कूटव्यवहारी वृत्तिघ्नो मिथ्याभिशंसी हिरण्यस्तेनः पतितसंव्यवहारी मित्रध्रुक् शरणागतघाती प्रतिकूलवृत्तिरित्येतान्यष्टादशैवोपपातकानी"ति । एवं सुमन्तुः — "स्त्रीरजतगोस्तैन्यं गोश्च गमनं नाशकं भूम्यनृतं क्षत्रियवैश्यगोघ्नता परिवित्तितावकीर्णिता प्रतिरूपकवृत्तिश्चेत्युपपातकानी"ति । शातातपे त्वष्टैवोपपातकान्युक्तानि— "अथोपपातकान्यग्न्युत्सादी"त्यादीनि । वासिष्ठे तु "सूर्याभ्युदितः सूर्याभिनिर्मुक्त" इत्युपक्रम्योपपातकिनामेनस्विन इत्येवं संज्ञा कृता, तन्मध्ये निस्सन्दिग्धोपपातकिनां परिवित्त्यादीनामनुक्रमणात् । अतो यथानिर्दिष्टानामेव प्रायश्चित्तसाम्यार्थमियं संज्ञेत्येवमेव व्याख्येयम् । अत्र च पारदार्यस्तेयस्त्रीवधादीनि महापातकतत्समातिरेकेण व्याख्येयानि ॥ २२९—२३६ ॥

इदानीं यथानिर्देशं ब्रह्महत्यादीना प्रायश्चित्तान्याह —

**शिरःकपालध्वजवान् भैक्षाशी कर्म वेदयन् ।**
**ब्रह्महा द्वादश समा मितभुक् शुद्धिमाप्नुयात् ॥२३७॥**

शिरःसंलग्नमेव कपालं ध्वजश्चिह्नं यस्य स एवमुक्तः । कपालग्रहणं चाखण्डशिरोवारणार्थम् । स्पष्टमन्यत् । एतच्च सार्ववर्णिकं प्रायश्चि-

---

१. 'भिनि' क. पाठः. २. 'मु' ग. पाठः. ३. 'नमना' च. पाठः. ४. 'ष्टादशैवो' ग. पाठः. ५. 'दि । वा' ग, 'दिना । वा' च. पाठः. ६. 'मु', ७. 'यैस्त्री' ग. पाठः.

त्तम् । स्मृत्यन्तरे तु क्वचित् सामर्थ्यान्नियमः । यथाह शङ्खः — "ब्रह्महा पारिषदानुमतः खट्वाङ्गी गर्दभाजिनी मृन्मयपात्रपतितशिष्टान्नभोजी स्वकर्म विख्यापयंश्चरेद् भैक्षमेककालाहारः शून्यागारनदीपर्वतगुहावृक्षमूलनिकेतनः । स एवं द्वादशे वर्षे शुद्धिमाप्नोति, अन्तरा वा ब्राह्मणं मरणान्मोचयित्वा गवां वा द्वादशानां परित्राणात्, सद्य एव वाश्वमेधावभृथे स्नात्वा पूतो भवतीत्यु"पक्रम्य सर्वाणि प्रायश्चित्तान्यभिधाय पुनस्तदन्ते गोसहस्रप्रदानमुक्त्वा पुनरुक्तं —

> "प्रायश्चित्तमुपासीनो वाग्यतस्त्रिरुपस्पृशेत् ।
> एकवासार्द्रवासाश्च लघ्वाशी स्थण्डिलेशयः ॥
> स्थानं वीरासनं मौनं मौञ्जीदण्डकमण्डलू ।
> भैक्षचर्याग्निकार्यं च कूश्माण्डीभिः सदा घृतम् ॥"

इति । न ह्यत्रैवर्णिकस्य कूश्माण्डीभिरग्निकार्यमुपपद्यते । अतस्त्रैवर्णिकस्यैवैतत् । क्वचिच्चोपदेशादेव विशेषः । यथाह शातातपः — "ब्राह्मणो ब्राह्मणं हत्वा तस्य शिरःकपालमादाये"ति । अत्र कपालनियममात्रमेव विशेषः । एवं यत्र सामर्थ्याच्छब्दतो वा कर्तृलाभः तन्नियतकर्तृकम् । यत्र त्वविशेषाभिधानं, यथात्रैव, तत् सार्ववर्णिकम्[2] । एवमन्यत्रापि योज्यम् । न चैकमेवैतत् सर्वस्मृतिसिद्धं द्वादशवार्षिकं व्रतमित्याशङ्कनीयं, प्रतिस्मृति प्रयोगभेदस्य "वक्तारो धर्मशास्त्राणामि"त्यत्र श्लोकेऽभिहितत्वात्[3] । अत एव च यदि शङ्खोक्तं द्वादशवार्षिकमारब्धं, ततोऽन्तरा ब्राह्मणं मरणान्मोचयित्वा गवां वा द्वादशानां परित्राणाच्छुद्धिः[4] । अन्यत्र तु नियोगतः परिसमापनमेव । अश्वमेधावभृथस्तु शाङ्खेऽपि[5] कल्पान्तरतयैव व्याख्येयः, श्रुतौ नैरपेक्ष्योपदेशात् । एवं हि श्रूयते — "स यदा राजानमुन्नेतोन्नयति, अथैनस्विन उपतिष्ठन्तेऽत उपब्रुवते इत्थं ब्राह्मणमवधिषमित्थं गुरोर्जायामभ्यगामिति । निरुक्तमेनो यथा यथा तान् ऋत्विजो राजा च ब्रूयुरश्वमेधावभृथपूता भवथेति । तेऽपोऽभ्यवयन्ति । यथाहिस्त्वचो निर्मुच्यते, एवं सर्वस्मात् पाप्मनो[6] निर्मुच्यन्ते[7] । तान् न जुगुप्सेयुः । स यावन्तमश्वमेधे-

---

१. 'घातयित्वा' ङ. च. पाठः. २ 'कमि', ३. 'णं मोच' ग. पाठः. ४. 'वि' च. पाठः. ५. 'ते—य', ६. 'नो मुच्य', ७. 'ते'. ग. पाठः.

नेष्ट्वा लोकं जयति, त्रिस्तावन्तं जयति । यस्यैवं विदुष एवमेनस्विनोऽवभृथमभ्यवयन्ती''ति जाबालिश्रुतिः । इयमेवं हि कात्यायनेनापि निबद्धा — ''उत्क्रान्ते यजमाने पापकृतोऽभ्यवयन्त्यचरित्वा व्रतान्यश्वमेधावभृथाख्यास्तें'' इति । अतो नास्यं स्मार्तप्रायश्चित्तार्थता घटते । नहि स्मृतिशेषत्वेन श्रुतिः शक्या कल्पयितुम् । यदि तु प्रक्रान्तद्वादशवार्षिकस्यैतत् स्यात्, ततः श्रुतावेव तदनुवादेन विधीयेत । न चैवं श्रुतिरस्ति । अपिच, यदि श्रुतौ द्वादशवार्षिकानुवादः स्यात्, ततोऽन्यतः प्राप्त्यभावात् तदेव तावद् विधेयं स्यात् । नहि तथा श्रवणे सति स्मृतेर्मूलान्तरकल्पनोपपद्यते यतः । तत्राश्वमेधावभृथस्नानमङ्गत्वेन परिसमाप्त्यर्थं वा विधीयेत । न च नित्यस्यानित्यपरिसमाप्तिर्युक्ता । यदि तु नैमित्तिकी परिसमाप्तिरुच्येत, तथा सति यदि कथञ्चिन्न स्नायात्, ततो द्वादशवार्षिके कृतेऽपि न शुध्यति । अथ तु नैमित्तिकं तदङ्गं स्नानमित्युच्येत, तथा सत्यवभृथे स्नात्वापि द्वादशवार्षिकशेषं परिसमापनीयमेव स्यात् । अतोऽश्वमेधावभृथस्य स्वातन्त्र्यकल्पनैव न्याय्या । अत एव च वासिष्ठे भ्रूणहत्याप्रकरणमुलङ्घ्यान्यत्रोक्तं—''अथापरं भ्रूणहत्याया द्वादशरात्रमब्भक्षो द्वादशरात्रमुपवसेदश्वमेधावभृथं वा गच्छेदि''ति । लघुत्वादस्यान्यशेषत्वाशङ्कापि कस्यचित् स्यात् । अत एव शङ्खेनापि ''सद्य एवाश्वमेधावभृथे स्नात्वा पूतो भवती''ति सद्य एवेत्यवधारणाद् द्वादशाब्दाकरणाच्चास्य स्वातन्त्र्यमेव दर्शितम् । एतच्च शङ्खोक्तं क्षत्रियवैश्ययोरेवाधीतवेदयोरनग्निकयोश्चाकामतो गुणवद्ब्राह्मणवधे द्रष्टव्यं, कामतो ह्येतदेव गोसहस्रदानोपचितम् । शूद्रस्याप्येतद्दानसहितं मन्त्रवर्जं वाकामकृत एव । कामकृते तु शूद्रस्य मरणान्तिकमेव । प्रतिलोमानां त्वकामतोऽपि मरणान्तिकमेव । कुत एतत् । शङ्खवचनादेव । ''अत ऊर्ध्वं पतनीयानी''ति प्रकृत्य ''निष्कृतिस्तेषां विहिता सद्भिरकामकृत'' इत्युक्तम् । क्षत्रियवैश्ययोश्चैतत् । अन्यत्र स्वल्पेतिकर्तव्यतायुक्तं ब्राह्मणस्योपदिष्टं यतः — ''ब्राह्मणो ब्राह्मणं घातयित्वा तस्य शिरःकपालमादाय तीर्थान्यनुचरेदात्मनः पापं संकीर्तयन्

१. 'व च का' ग., 'बका' च. पाठः. २. 'स्ता' ग. पाठः. ३. 'स्य प्रा', ४. 'स्या', ५. 'त्या' ङ. पाठः.

द्वादशे वर्षे शुद्धिमाप्नोति, अथाश्वमेधं पश्यति तस्य दर्शनादेव शुद्धिमाप्नोती''ति । तच्च स्वशब्दोपादानाद् ब्राह्मणस्यैव । न चैतत् कामकृतविषयं ब्राह्मणस्यापीति वक्तुं शक्यम्, अकामकृत इति वचनात् । अतः क्षत्रियवैश्ययोरेवैतदिति युक्तम् । शूद्रस्य त्वसामर्थ्यान्नैतद् युक्तम् । अनग्निकयोरिति कुतो लब्धं, केवलस्य पुंसोऽविधानात्, पत्न्यधीनत्वाच्चाग्निसाध्यानां कर्मणां, तस्याश्च पतनकारणाभावात् । यत्रैवोभयोः पतनं, तत्रैव वैतानिकसंबद्धानि प्रायश्चित्तानि । अन्यतरपतने तु शरीरमात्रसाध्यैरेवाधिकारः । न चात्र किञ्चिदौपासनादिसंबद्धं कर्मास्ति । यत्तु कूश्माण्डीभिरग्निकार्यं, तत् समिदाधानं ब्रह्मचारिसम्बन्धिवत् प्रत्येतव्यम् । तच्च लौकिक एवाग्नौ युक्तम् । गर्दभाजिनोपदेशाच्चात्रावकीर्णिपशुरपि यदि प्राप्नोति, सोऽपि लौकिक एवाग्नौ युक्तः । अतोऽनग्निकस्यैवैतदिति स्थितम् । नन्वेवमपि यदि नामाग्नेरत्रोपयोगो न स्यात्, न त्वनग्निकस्यैव प्रायश्चित्तमिति । सत्यं, यद्यत्राप्यग्निसम्बन्धं प्रायश्चित्तान्तरं न स्यात् । तदपि तु श्रूयत एव । तद्यथा—''यजेत वाश्वमेधेने''त्यादि मानवम् । तत्राश्वमेधो राष्ट्राधिपतेरेव, ''तस्माद् राष्ट्र्यश्वमेधेन यजेते''ति श्रुतेः । स्वर्जिदादयस्त्रयाणामपि वर्णानामिष्टप्रथमयज्ञानां भवन्ति । न च तेषामन्यत् प्रायश्चित्तमस्ति, सापेक्षत्वेन विषमशिष्टविकल्पासम्भवात् । तदनधिकृतानामेवान्यत् प्रायश्चित्तं युक्तं, तस्यानन्यविषयत्वादिष्टप्रथमयज्ञस्य । अनन्यविषयत्वादनिष्टप्रथमयज्ञस्याप्याहिताग्नेरग्निष्टोम एव प्रायश्चित्तम् । गौतमेनाश्वमेधावभृथमुक्त्वा ''अन्ययज्ञेऽप्यग्निष्टुदन्तश्चेदि''त्युक्तम् । न चाग्निष्टुदन्तः कश्चित् क्रतुरस्ति । सत्राहीनयोः प्रायशोऽतिरात्रान्तत्वात् । यत्रापि क्वचिदतिरात्रान्तता नास्ति, तत्राप्यग्निष्टुदन्तता नास्त्येव । अतोऽयमग्निष्टुच्छब्दोऽन्वग्निष्टोमस्तोत्रवचनो द्रष्टव्यः । तदन्तश्चाग्निष्टोम एव भवति । यस्य चान्यप्रयुक्तस्याप्यवभृथे स्नात्वा शुद्धिर्भवति, तत्र स्वयंप्रवृत्तेर्दण्डापूपन्यायेन सिद्धेरग्निष्टोमस्यास्त्येव विधानम् । काठकेऽप्यश्वमेधवदग्निष्टोमस्यापि ''भ्रूणहत्याया वा एषोऽतिमुच्यते, योऽग्निष्टोमसंस्थं यजत'' इत्याहिताग्नेराग्निष्टोम एवानिष्टप्रथमयज्ञस्य । इतरस्य तु स्वर्जिदादयो

द्रष्टव्याः । यस्य त्वौपासनमात्रं, तस्यान्यत् प्रायश्चित्तं शाङ्ख एवोक्तम् । तत्र प्रायश्चित्तमकामावाप्तौ । कामकृतेऽप्येके "पतितो ह्यात्मानमुद्धरेत् संवत्सरं तप्तकृच्छ्रमाचरेत् कृतवापनः शुचिरपोऽभ्यवेयात् त्रिरेकार्द्रवासाः काष्ठमौनी वीरासनमासीत रात्रौ, दिवा तिष्ठेद् युक्तोऽग्निकार्यपरः सावित्रीं सवनानुगां जपेत्, स्वयं व्रतमभ्युपगम्य कुशचीरफलकवासा मौञ्जी मेखली दर्भ वित्रपाणिर्हविष्यं श्रपयेच्चरुं भैक्षमदुष्टं वा यात्रिकमश्नीयाद् द्वादशरात्रं चोपवासो ब्राह्मणतर्पणं गवाह्निकमित्येवं व्यवहार्योऽन्यथा पतितः शिष्टैरसम्भाष्य" इति । यद्यपि चैतद् "न विक्रीणीयादविक्रेयाणी"ति प्रकृत्य "तिलमधुगुलघृततैलेत्यादिनीलीपर्यन्ताविक्रयात् सद्यः पतती"त्युक्त्वोक्तं, तथाप्येतन्न तद्विषयत्वेन प्रायश्चित्तं युक्तं, "पतितो ह्यात्मानमुद्धरेदि"ति श्रुतेः । न चैषा पूर्वत्रोपयुज्यते, प्रकृतत्वेनैव सिद्धत्वात्, प्रायश्चित्तस्य चातिगुरुत्वेन महापातकोचितत्वात् । अतः श्रुतेः सामर्थ्याच्च प्रकरणस्य बाधितत्वान्महापातकप्रायश्चित्तमेवेति व्याख्यातृसंप्रदायाविच्छेदात् सिद्धम् । तथाच सुमन्तुना — "रागद्वेषादलभ्यमाने प्रायश्चित्ते जपहवनाध्ययनब्रह्मचर्यपरो भैक्षाशी दण्डी मेखली त्रिषवण्यधःशायी स्वयमेव महदशुभं पुनाति, न ब्राह्मणस्य पतनमिच्छन्त्याचार्याः, किल्बिष्युपगतः पातव्य इत्याङ्गिरस" इति । ब्राह्मणग्रहणं चात्र प्रदर्शनार्थम् । यत्र च स्वयमभ्युपगम्य संवत्सराच्छुद्धिरिष्यते, तत्रावश्यं ततोऽधिकं परिषदा न दातव्यम् । तथाचानेनैवोक्तं — "ब्रह्महसुरापगुरुतल्पगसुवर्णस्तेयिनां महापातकिनः वक्ष्यामः प्रायश्चित्तमि"ति । "ब्रह्महा संवत्सरं कृच्छ्रं चरेदधःशायी स्वकर्माचक्षाणो भैक्षाहारो दिव्यनदीपुलिनशायी सद्ग्रामाश्रमगोष्ठपर्वतप्रस्रवणतपोवनविहारी स्यात्, संवत्सरे पूर्णे हिरण्यमणिगोवृषान्नतिलभूमिसर्पींषि ब्राह्मणेभ्यो दत्त्वा पूतो भवत्यश्वमेधावभृथस्नानेन वा सद्य" इति । "अतोऽर्धमर्धं क्षत्रियवैश्यवधे व्याख्यातमि"ति जपहवनस्वाध्यायपरतादि पूर्वोक्तं च समुच्चीयते । कृच्छ्रशब्दश्चायं तप्तकृच्छ्रे द्रष्टव्यः । तदेतन्नासत्यौपासने भवति, "कर्म स्मार्तं विवाहाग्नौ" इति नियमात् । नन्वेतदप्यपत्नीकस्य पतने नैव युक्तं, "जायापत्योर्न विभागो

१. 'त् प्रयु' ङ. पाठः. २. 'र्यो' ग. पाठः ३. 'नां व' ङ. पाठः

विद्यते । पाणिग्रहणाद्धि सहत्वं कर्मणस्तद्द्रव्यफलेषु चे"ति स्मरणात् । न च पत्न्याः पतनं,

"आ शुद्धेः संप्रतीक्ष्यो हि महापातकदूषितः"

इत्युक्तत्वात् । सत्यमेवं, वैतानिके पत्न्या विना कर्मानुष्ठानासम्भवात् । स्मार्तानि तु कृतावसथ्यस्यैव कैवल्यसम्बन्धीन्यपि कर्णाण्यौपासने भवन्ति । यथा ब्रह्मयज्ञसम्बन्धीनि प्रायश्चित्तानि । नहि ब्रह्मयज्ञे सपत्नीकस्याधिकार इति शक्यं वक्तुम् । न च तद्व्रतेऽप्यपचारे महाव्याहृतिहोमाद्यधिकारः । एवमुपाकर्मण्यपि । यथा च तत्र, तथौपासने युक्तत्वाद्धोमानां केवलस्यापि पतने प्रवृत्तिरव्याहतैवेत्यलं प्रसङ्गेन ।

अतः स्थितमेतत् क्षत्रियवैश्ययोरनग्निकयोरधीतवेदयोश्च गुणवद्ब्राह्मणवधे शङ्खोक्तं द्वादशवार्षिकमिति । शूद्रस्य च ब्राह्मणमात्रवधे आपस्तम्बेन द्वादशवार्षिकमुक्तम् । शूद्रापेक्षया च क्षत्रियवैश्ययोरल्पं प्रायश्चित्तमित्येतद् दर्शयिष्यामः । अत इदं गुणवद्ब्राह्मणवध इत्युक्तम् । कामकृते तु गोसहस्रदानसहितम् । कुत एतत् । शङ्खवचनादेव, "चतुर्षु वर्णेषु प्रमाप्य द्वादश संवत्सरान् षट् त्रीन् संवत्सरं च व्रतमादिशेत्, तेषामन्ते गोसहस्रं ततोऽर्धं तस्यार्धं तदर्धं च दद्यात्, सर्वेषामानुपूर्व्येणे"ति । शूद्रस्य चैतत् प्रायश्चित्तं सामर्थ्याद् विज्ञेयम् । नह्युत्कृष्टवर्णानामपकृष्टवध एतत् संभवति । एवं ह्युक्तं—"सर्वेषामन्योन्यापकृष्टवधे चान्द्रायणमि"ति । अतः शूद्रस्यैव वित्तवत इदं प्रायश्चित्तम् । निस्स्वस्य त्वापस्तम्बोक्तं, वैश्यस्य वा समस्तं चोक्तम् । ततश्च क्षत्रियवैश्ययोः कामकृत एतत् स्यात्, शङ्खवचनादेव, यथापकृष्टं च यदकामकृते कामकृते तद्यथोत्कृष्टमिति, अतः कामकृते गोसहस्रसहितमित्येषा दिक् ।

आपस्तम्बोक्तं तु शूद्रविषयं — "पूर्वयोर्वर्णयोर्वेदाध्यायिनं हत्वा सवनगतं वाभिशस्तः । ब्राह्मणमात्रं च । गर्भं च तस्याविज्ञातम् । आत्रेयीं च स्त्रियम् । तस्य निर्वेशः । अरण्ये कुटिं कृत्वा वाग्यतः शवशिरोध्वजोऽर्धशाणीपक्षमधोनाभ्युपरि जान्वोराच्छाद्य । तस्य पन्था अन्तरां वर्त्मनी । दृष्ट्वार्यमति-

---

१. 'पि' च. पाठ. २. 'ह्य', ३. 'पीति । य', ४. 'ति', ५. 'कामका', ६. 'तान्यादि', ७. 'धनस्य', ८. 'क्तं, ततश्च', ९. 'टी', १०. 'रार्मावर्तिनं इ' ग. पाठः. ११. 'द्धवाचार्य' ग. च. पाठः.

कामेत् । खण्डेन लोहितेन शरावेण ग्रामं प्रतिष्ठेत । ततोऽभिशस्ताय भिक्षामिति कर्माचक्षाणः सप्तागाराणि चरेत् । सा वृत्तिः । अलब्धोपवासः । गाश्च रक्षेत् । तासां निष्क्रमणप्रवेशने द्वितीयो ग्रामेऽर्थः । द्वादश वर्षाणि चरित्वा सिद्धः सद्भिः सम्प्रयोगः । आजीपथे वा ब्राह्मणैरभ्युपजिगीषमाणस्त्रिः प्रतिराद्धोऽवजित्य वा मुक्तः । आश्वमेधिकं वावभृथमुपेत्य मुच्यते । धर्मार्थसन्निपाते अर्थग्राहिण एतदेव ।" इति । अत्र च पूर्वयोर्वर्णयोरिति शूद्रापेक्षया क्षत्रियवैश्यावुक्तौ, ब्राह्मणमात्रं चेति वचनाद् न ब्राह्मणक्षत्रियौ पूर्ववर्णाविति घटते । तेनैतच्छूद्रस्येति द्रष्टव्यम् । न चात्र जपहोमादि किञ्चिच्छ्रुतं, येन त्रैवर्णिकविषयत्वमाशङ्क्येत । अनेनैवान्यत्रापि जातिकृता गुणकृता च व्यवस्था व्याख्येया । द्वादशसु च स्मृतिषु द्वादश वार्षिकाणि पठ्यन्ते । तान्येवं विवेक्तव्यानि । तत्र मानवं याज्ञवल्कीयं च सर्ववर्णानाम् । तत्र च ब्राह्मणस्य कामकृते गुणवद्ब्राह्मणवधे, क्षत्रियवैश्ययोरकामकृते निर्गुणवधे, शूद्रस्य त्वकामकृते ब्राह्मणमात्रवधे, एवं वैश्यस्यापि क्षत्रियापेक्षया सर्वत्र च गुरुतरं प्रायश्चित्तं प्रयोज्यम् ॥ २३७ ॥

ब्रह्महत्यायामेवेदमन्यत् प्रायश्चित्तं —

**लोमभ्यः स्वाहेति हि वा लोमप्रभृति वै तनुम् ।**
**मज्जान्तं जुहुयाद्वापि मन्त्रैरेभिर्यथाक्रमम् ॥ २३८ ॥**

हिशब्दवैशब्दौ पादपूरणार्थौ । वाशब्दश्चाज्यापेक्षया लोमादिद्रव्यैर्विकल्पार्थः । तनुः शरीरं, तद् लोमप्रभृति लोमानि त्वचं च लोहितं मेदो मांसं स्नाय्वस्थि मज्जानमित्येवमन्तं, लोमभ्यः स्वाहेत्येतैर्यजुर्वेदपठितैराश्वमेधिकैर्द्विरभ्यस्तैर्मन्त्रैर्जुहुयात् । आज्यं वा द्विरभ्यस्तैः प्रत्येकं षोडशभिर्जुहुयात् । वापीत्ययं तु द्वितीयो वाशब्दः पूर्णप्रायश्चित्तापेक्षया विकल्पार्थः । स नैककर्त्रपेक्षया । ब्रह्महत्यायामेकस्यामेव यथाधिकारं कर्तृभिर्द्वादशवार्षिकमिदं वा कर्तव्यमित्यर्थः । ततश्चैतत्सामर्थ्यादधीतवेदस्याभिमतश्च स्यात् । लोमप्रभृतीनां चात्र चतुर्थ्या मान्त्रवर्णिकं देवतात्वम् । ततश्च य एव लोमत्वगादीनामध्यात्माधिदैवाधियज्ञवित्, तस्यै-

१. 'णेन व्यु' ग. पाठः. २ 'धे वा शू', ३. 'ध्ये' ङ. पाठः.

वाधिकारः । तदधिगमविशेषापेक्षया च द्रव्यविकल्पव्यवस्था व्याख्येया । न चात्र शरीरदाहः, वचनाभावात् । लोमादीनां कार्त्स्न्येन होतुमशक्यत्वाद् अवश्यमेकस्मादेवाङ्गुल्यादेरवयवाद्धोतव्याः । तेन नैतन्मरणान्तिकमिति व्याख्येयम् । वासिष्ठेऽप्येवमेव—"भ्रूणहाग्निमुपसमाधाय जुहुयाद् लोमानि मृत्योर्जुहोमि, लोमभिर्मृत्युं वासये प्रथमोमि"त्यारभ्य "मज्जानं मृत्योरि"त्येवमन्तम् । तत्रापि होममात्रमेव, शरीरप्रक्षेपस्यानुपदेशात् । ये त्वल्पत्वात् प्रायश्चित्तस्य स्मृत्यन्तरे च—

"प्रास्येदात्मानमग्नौ वा सामिद्धे त्रिरवाक्शिराः"

इति शरीरत्यागदर्शनादत्रापि शरीरत्यागं वर्णयन्ति, ते संहिताध्ययने किमित्यामरणादावृत्तिं न कुर्वन्ति — "त्रिः संहितामधीत्यातो नियतं भुक्त्वा पुनस्त्रिरि"ति । एवं सर्वेषां जीवप्रायश्चित्तानामल्पत्वाद् यथासम्भवं मरणान्तिकैः सह तुल्यतासिद्ध्यर्थं कल्पना प्रसज्येत । अथ कथञ्चित् तेषु विषयकल्पना, ततोऽत्रापि तदेव युक्तं, न त्वश्रुत एवाग्नौ शरीरप्रक्षेपः । अतश्च वासिष्ठेऽपि होम एवेति स्थितम् । यदपि "भ्रूणहाग्निमुपसमाधाय जुहुयादि"ति होमवचनादेव प्राप्तस्याग्नेः पुनर्वचनं, तदपि न लौकिकाग्निप्राप्त्यर्थम्, अदृष्टकल्पनाप्रसङ्गात् । भ्रूणहतया वा कस्यचिन्मन्दबुद्धेः संस्कृताग्निविनाशाशङ्का मा भूदित्येवं व्याख्येयं, न तु वचनप्राप्तस्याग्नेः संस्कृतस्य ज्ञापकमात्रेण त्यागकल्पनेत्येषा दिक् । स्पष्टतरं तु विषयकल्पनां प्रायश्चित्तप्रकरणस्यान्ते वक्ष्यामः ॥ २४८ ॥

तथेदमन्यद् वैकल्पिकं —

**ब्राह्मणस्य परित्राणाद् गवां द्वादशकस्य वा ।**
**तथाश्वमेधावभृथस्नानाद्वा शुद्धिमाप्नुयात् ॥ २४९ ॥**

ब्राह्मणग्रहणं चात्र गुणवति द्रष्टव्यं न जातिमात्रे, समासाकरणात् । समासे हि लिङ्गानभिव्यक्तेर्जातिमात्रप्रतिपत्तिः स्यात् । नन्वेवमपि पुंस इत्येव लभ्यते, न तु गुणवत इत्यपि । सत्यमेवम् ।

१. 'येति प्र' च., 'यदिति प्र' ग. पाठः. २. 'मामार' ग. च. पाठः. ३. 'यद्यल्प' ङ. पाठः. ४. 'सिद्धस्या' ग. पाठः. ५. 'म्र' ङ. च. पाठः. ६. 'नं च' पाठः. ७. 'शब्दोऽत्र', ८. 'व्यो', ९. 'सेन हि' ग. पाठः. १० 'त्रे' ङ च. पाठः.

किन्त्वेवं सति स्त्रीत्वनिवृत्त्यर्थत्वात् परिसंख्या स्यात् । लिङ्गवच्चैकत्वस्यापि विवक्षितत्वाद् ब्राह्मणद्वयपरित्राणे वैगुण्यं प्रसज्येत । अथातन्त्रं लिङ्गं तत्सहचरिताध्ययनादिगुणप्राप्त्यर्थं भवेत् । ततो न कश्चिद् दोषः । तेन गुणवतो ब्राह्मणस्य परित्राणादित्येव युक्तम् । परिशब्दाच्च सर्वतः स्वप्राणपरित्यागेनापीत्यर्थः । गवां द्वादशकस्य वेत्यत्रापि गुणवतो ब्राह्मणस्य स्वभूतानामित्यधिकाराल्लभ्यते । तथाशब्दः प्रकारार्थः । यथा 'शिरःकपाली'त्यादिना शुद्धिमवाप्नुयात्[1], तथा गोब्राह्मणपरित्राणादप्यन्यानपेक्षादेवेत्यर्थः । तथाच मनुना —

"कृतवापनो वा निवसेद् ग्रामान्ते गोव्रजेऽपि वा ।
आश्रमे वृक्षमूले वा गोब्राह्मणहिते रतः ॥"

इत्युक्त्वोक्तं —

"ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान् परित्यजन् ।
मुच्यते ब्रह्महत्याया गोप्ता गोब्राह्मणस्य वा ॥"

इति । तेन ज्ञायते प्रायश्चित्तान्तरमिदं न तु प्रक्रान्तद्वादशवार्षिकस्य । तद्विषयत्वेन गोब्राह्मणहिते रत इत्यनेनैव सिद्धत्वाच्छ्लोकान्तरारम्भो निष्प्रयोजनः स्यात् । न चानेन प्रकारेण[3] हिते रतः स्यादित्येवमर्थः श्लोकान्तरारम्भ इति युक्तं, वाशब्दवैयर्थ्याद्, गोप्ता गोब्राह्मणस्य वेति च पुनरभिधानात् । अतः स्वतन्त्रमेवेदं प्रायश्चित्तान्तरं भगवतोऽभिप्रेतम् । अत एव च निस्सन्दिग्धेनाश्वमेधावभृथस्नानेनास्य वैकल्पिकत्वमाचार्येणोक्तं —

"तथाश्वमेधावभृथस्नानाद् वा शुद्धिमाप्नुयाद्"

इति । यथा[4] चाश्वमेधावभृथस्यान्यत्रानुप्रवेशो न सम्भवति, तथा प्रदर्शितमेव । शङ्खोक्तस्य च "अन्तरा वा ब्राह्मणान् मरणान्मोक्षयित्वे"ति[5] तदुक्तद्वादशवार्षिकविषयं न[6] सार्वत्रिकमित्येतद् व्याख्यातमेव ॥ २३९ ॥

१. 'माप्नु', २. 'प्यन', ३. 'ण गोब्राह्मणहि' गे. च. पाठ., ४. 'थाश्व' ग. पाठ. ५. 'ति । तद् त' च. पाठः. ६. 'न च सा' ग पाठः.

तथेदमन्यत् वैकल्पिकं —

**दीर्घतीव्रामयग्रस्तं[1] ब्राह्मणं गामथापि वा ।**
**दृष्ट्वा पथि निरातङ्कं कृत्वा वा ब्रह्महा शुचिः ॥ २४० ॥**

आमयो रोगः, तेन दीर्घेण चिरकालप्ररूढतयात्यर्थं कृच्छ्रसाध्येन तीव्रेण च राजयक्ष्ममहाकुष्ठादिना ग्रस्तमेकान्ततो भुक्तम् । ब्राह्मणमित्यत्रापि पुल्लिङ्गनिर्देशोऽध्ययनादिगुणप्रतिपत्त्यर्थ एव, न स्त्रीत्वनिवृत्त्यर्थः । अथशब्दस्योत्कृष्य वाशब्देन सह योजना—अथवोक्तविशेषणां गामपीति । अपिशब्दश्चैकसंख्यापेक्षया सम्भावनार्थः — ब्राह्मणजातीयं निर्गुणमपि, तथैकमपि, किमुत गुणवन्तो भूयांसो वेत्यभिप्रायः । पथि दृष्ट्वेत्यभिसन्धिनिवृत्त्यर्थम् । निरातङ्कं निश्शेषरोगच्छेदान्निर्भयं व्यपगताकूतं स्वस्थं कृत्वा । वाशब्दादामरणाद्वा सर्वात्मना सर्वस्वेनापि स्वप्राणोपरोधेनापि[2] शुश्रूषित्वा । ब्रह्महा शुचिः स्यादिति प्रकृतत्वेऽपि ब्रह्महा शुचिरिति पुनर्वचनं सर्वाधिकारप्रतिपत्त्यर्थं, सर्वत्रामतिपूर्वे कामकृते च त्रैवर्णिकानामिदं परिचर्यमाण[3]ब्राह्मणगुणापेक्षया भूयस्त्वापक्षेया परिचारकशक्तिगुणापेक्षया च योज्यम् । शूद्रस्याप्यमतिपूर्वं एतद्भवत्येव परित्राणं तदात्वविषयम् । यथा प्रदीप्ते वेश्मन्यन्तर्ब्राह्मणं गोद्वाशकं वा निस्सरणासमर्थं स्वमरणमङ्गीकृत्य प्रविश्यातिवाहयेद् यः, स तत्परित्राणाद् मरणाद्वा शुध्यतीति । अत्र तु आ निरातङ्कभावाद् आ मरणाद्वा परिचर्येति पुनरारम्भः ॥ २४० ॥

तथेदमन्यद् वैकल्पिक ब्रह्महत्यायामेव —

**आनीय विप्रसर्वस्वं हृतं घातित एव वा ।**
**तन्निमित्तं क्षतः शस्त्रैर्जीवन्नपि विशुध्यति ॥ २४१ ॥**

सर्वस्ववचनं बहुत्वोपलक्षणार्थं, भूयसो ह्यपहृतस्य प्रत्यानयनं दुष्करं यतः । सर्वस्वं तु कदाचित् घटमात्रमपि भवति । तच्चाल्पेनापि प्रयासेन[4] शक्यमाहर्तुम् । तत्र घातितवचनं नातीव समञ्जसं स्यात् । घातित एवेति चैवकारेण यत्र हृतप्रत्याहरणे मरणमेवौचित्यात्[5] प्राप्नोति

१. 'स्त', २. 'णावरो' ग. पाठः. ३. 'णगु' च. पाठः. ४. 'यत्नेन', ५. 'मौचि' ग. पाठः.

तत्सर्वस्वमिति स्पष्टयति । ततश्च तदाहरणनिमित्तं यथाशक्त्याघातितोऽपि पुनःपुनरुत्थाय व्यायच्छन्ननेकशः शस्त्रैः क्षतो यदि जीवति, तथाप्यनाहृतेऽपि द्रव्ये विशुध्यत्येव । एतच्चाक्षत्रियस्याहरणसम्भावनायुक्तस्य च प्रायश्चित्तम् । क्षत्रियस्य त्वेतान्नित्यत्वादनुपदेश्यमेव । यस्याप्युदाहरणसम्भावनास्ति, तस्याप्यानीयेत्येतन्नातीव समञ्जसम् । तेन सम्भावितस्याक्षत्रियस्य चेति स्थितम् । शस्त्रग्रहणं च प्रतिपक्षस्य दुर्जयत्वं प्रदर्शयितुम् । तेनाशस्त्रैरपि पाषाणादिभिर्निश्चेष्टीकृतः क्षतमन्तरेणापि शुध्यतीत्यवसेयम् ॥ २४१ ॥

तथेदमपरं प्रायश्चित्तद्वयम् —

**अरण्ये नियतो जप्त्वा त्रिष्कृत्वो वेदसंहिताम् ।**
**शुध्येत वा मिताशीत्वा प्रतिस्रोतः सरस्वतीम् ॥२४२॥**

ग्रामान्निष्क्रम्यारण्ये स्थित्वा नितरां यतः तदर्थानुसंधानैकनिष्ठः त्रिरावृत्त्या वेदसंहितां, मन्त्रब्राह्मणमित्यर्थः । संहिताग्रहणं चारमणस्थानेष्वेवारमणनियमार्थम् । पदक्रमादीनां तु पुरुषकृतत्वादेव व्यावृत्तेर्न तन्निवृत्त्यर्थं संहितावचनम् । त्रिरित्येतावता च सिद्धे त्रिष्कृत्व इत्युक्तं कृत्वसुज्विषया त्तिसिद्ध्यर्थम् । तेन पञ्चकृत्वः षट्कृत्व इत्येवमाद्यप्यत्रानुबन्धगुणापेक्षया योज्यम् । मानवेऽपि —

"जपेद् वा नियताहारस्त्रिर्वै वेदस्य संहिताम् ।"

इति । वेदस्य त्रिरिति सम्बन्धादेकस्य त्रिर्जप्त्वा ततो वेदान्तरस्य त्रिरित्येवं योज्यम्, अस्मादेव कृत्वसुच्प्रयोगात् । वैशब्देन च प्रसिद्धार्थद्योतकेनैतदेव द्योतितं — स्मृत्यन्तरसम्प्रदायापेक्षः श्लोकार्थो ग्राह्य इति । एतच्च विद्वद्विषयत्वाद् वेदार्थज्ञस्यैव प्रायश्चित्तं तद्विशेषापेक्षया योज्यम् । अन्ये त्वरण्ये एव यो नियतः सन् जप्त्वा त्रिष्कृत्वो वेदसंहितां शुध्यतीत्येवं वनस्थस्यैवैतदिति व्याचक्षते । तत्त्वरण्यस्य मानवेऽनुपदेशादविशेषाभिधानेऽपि च तत्सिद्धेर्नावश्यमङ्गीकर्तव्यम् । शुध्येत वा मिताशीत्वा,

१. 'स्य', २. 'वा' ग. पाठ., ३. 'प्राप्त्यर्थम्' ग. च पाठः. ४ 'त', ५. 'ण्य, विय', ६. 'सन् ज' ग. पाठः.

मिताशी च यथाश्रमोचितम् "अष्टौ ग्रासा मुनेर्भक्तमि"त्येवमादि, न पथि श्रान्तोऽपि गोतृप्त्या वर्तेतेत्यर्थः । मिताशी इत्वा गत्वेत्यर्थः । स्रोतोऽभिमुखः सोमेश्वरादारभ्याप्लक्षम् । मानवे तु हविष्यभुग्वेत्युक्तम् । तच्च यतिब्रह्मचारिणोर्यथोक्तलक्षणं भैक्षमेव । इतरयोस्तु स्वधर्मानुसारेणौपासनश्रामणकाग्निसंस्कृतव्रीहियवश्यामाकनीवारादि प्रत्येतव्यम् । ननुच पतितस्याश्रमव्यवस्था नैवास्ति, पतितत्वादेव, "द्विजातिकर्मभ्यो हानिः पतनमि"ति गौतमवचनात् । सत्यमेवं, प्राक् प्रायश्चित्तप्रवृत्तेः । प्रायश्चित्तप्रवृत्तौ तु यथावर्णं यथाश्रमं च प्रायश्चित्ताविरोधेन वर्तितव्यम् । यदि तु पतितत्वेनाश्रमव्यवस्थापगमः स्यात्, ततः पतितस्याहवनीयाद्यग्निविनाशादग्निष्टुदादिचोदना दुःश्लिष्टा एव स्युः । तेन सत्यपि पतने गृहस्थत्वस्यानपगमादग्नीनामविनाशः । अतश्चान्यतरपतने सूतकादाविवान्यतरेणाग्नयो धार्याः । शुद्ध्यनन्तरकाले च कर्मप्रवृत्तिः । उभयपतने त्वपरित्यज्यैवाग्नींस्तत्पालनमुभाभ्यां कर्तव्यम् । प्रायश्चित्तं च तत्सम्बन्धापरित्यागेन जपहोमादिलक्षणं प्रत्येतव्यम् । तेन सरस्वतीप्रायश्चित्तमपि हविष्यंभोजननियमाद् यथाश्रमं स्वधर्मानुसारेण व्याख्येयम् । अनग्निकस्य तु स्नातकस्यापि भैक्षाहारत्वं "भैक्षाहारो वा सरस्वतीं प्रतिस्रोतसमि"ति हारीतवचनाद्, इत्येषा दिक् ॥ २४२ ॥

तदेतदपरं क्षत्रियस्यैव प्रायश्चित्तं —

**संग्रामे वा हतो लक्ष्यभूतः शुद्धिमवाप्नुयात् ।**

किं मरणान्तिकमेवेदं प्रायश्चित्तं, प्रवृत्तिस्तावत् कृतमरणनिश्चयस्यैव ।

तथा प्रवृत्तस्तु सः —

**मृतकल्पः प्रहारार्तो जीवन्नपि न शुध्यति ॥ २४३ ॥**

सङ्ग्रामवचनं क्षत्रियाधिकारप्रतिपत्त्यर्थम् । लक्ष्यभूत आत्मनो रक्षामकुर्वन् सन्नहनादिरहितः परकीयशस्त्राण्यकवचयन् साङ्ग्रामिकविधिना

---

१. 'याग्नि', २. 'रोधेन व्या', ३. 'स्यापि स्ना', ४. 'स्य भै' ग. पाठः. ५. 'क्ष्य' क. पाठः. ६. 'अन्यदीय' ग. पाठः.

राजार्थे गवार्थे ब्राह्मणार्थे वाभिमुखो घातितः । तथाच वसिष्ठः— "राजार्थे ब्राह्मणार्थे गवार्थे वा सङ्ग्रामेऽभिमुख आत्मानं घातयेदि"ति । अस्वामी च राजा प्रत्येतव्यः । शुद्धिमाप्नुयादिति संशयव्युदासार्थो लिङ्प्रयोगः । तथाचाह मनुः—

"लक्ष्यं शस्त्रभृतां वा स्याद् विदुषामिच्छयात्मनः ।"

विदुषां शस्त्रविदां संग्रामनिपुणानाम् । आत्मन इच्छया न स्वाम्यादेः । शरवेध्यकमिवात्मानमगोपायन् युद्धाभिमुखो भवेत् । नात्र संशयः कार्य इत्यत्रापि संशयव्यावृत्त्यर्थ एव लिङ्प्रयोगः ।

"प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः"

इत्येतदपि ब्राह्मणव्यतिरेकेणैव । स्तेयाधिकारे "ब्राह्मणस्तपसैव चे"ति ब्राह्मणस्तपसैव पापमपनयेद्, न मरणान्तिकेनेति । एतच्च स्तेयाधिकारोक्तमपि विशेषवचनादृते सर्वविषयं द्रष्टव्यम् । तथाचापस्तम्बेन "गुरुतल्पगः सूर्मीं ज्वलन्तीं प्रविश्यात्मानं दहेदि"त्युपक्रम्य "मिथ्यैतदिति हारीतो यो ह्यात्मानं परं वाभिहन्यतेऽभिशस्त एव स" इत्यनेन विधिना "ओत्तमादुच्छ्वासाच्चरेदि"त्यब्राह्मणाभिप्रायेणैव दर्शितम् । आचार्येण त्वग्निप्रवेशो नोक्तः, प्रत्यक्षश्रुतिचोदितत्वात् । एवं हि काठके श्रूयते—"अनाशकेन कर्शितोऽग्निमारोहेत् त्रिरवाक्शिरा" इति । अत एवाश्वमेधस्वर्जिदादीनामप्यत्रानुपदेशः । मानवे तु श्रौतस्मार्तानामेकीकृत्योपन्यासः समानार्थतयैव स्मार्तानां बाधाशङ्कानिवृत्त्यर्थः । एवं तर्हि बाध एव स्मार्तानां युक्त इति व्यर्थो भगवतः प्रयत्नः । सत्यं, यद्येकविषयता स्यात् । अत एव विषयभेदेन व्याख्यातम् । इतरथा हि वाशब्दादेकनिमित्तसम्बन्धाच्च यदृच्छाविकल्प एव स्यात् । यन्नामाविशेषेणैव प्राप्नोति, तत्रैव कल्पान्तरानर्थक्याद् विषयव्यवस्था । यथा दर्शितं—"योऽश्वमेधेन यजते, य उ चैनमेवं वेदे"ति । नह्यनधीत्याश्वमेधेन यष्टुं कश्चिच्छक्नुयात् । अत एव

"अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्"

१. 'जार्थे ब्राह्मणार्थे वा गवार्थे वा' ङ. पाठ. २. 'मतो घा' ग. पाठः ३. 'सैवेति' ग., 'सैव प्रा' क पाठ.. ४ 'हतेऽपि स' ग ङ. पाठः. ५. 'नैव वि' ग. पाठ.. ६. 'ना दत्ताद्' ङ. पाठ. ७. 'ति', ८. 'ण द' ग पाठ ९ 'तया स्मा' ङ. पाठः.

इति, "तेनैव पथा मध्वर्थिनः पर्वतं गच्छेयुरि"ति च शाबरे दर्शितम् । न चात्राल्पत्वमहत्त्वे विद्येते । कस्यचिद्धि क्लेशासहिष्णोः सात्त्विकस्य द्वादशवार्षिकान्मरणमेव सुकरम् । अन्यस्य तु क्लेशसहिष्णोः सत्त्वहीनस्येतरत् । एवमुदारतृष्णापरापेक्षया मरणसर्वस्वदानयोस्तुल्यता । विद्वन्मूर्खयोश्च संहिताध्ययनमरणद्वादशवार्षिकादिष्वेवमेव । न च यस्याविशिष्टं त्रयोदशस्वपि सामर्थ्यं, तमेवैकं पुरुषमङ्गीकृत्य मानव आरम्भः । तथा सति समविकल्प एव स्यात् । अतो विषयव्यवस्थयैव श्रौतस्मार्तानां परस्परव्याख्यानमुपदेशबलेनैवानुमर्तव्यं न त्वन्यानर्थक्येन इत्येषा दिक् ॥ २४३ ॥

वित्तवतस्त्रैवर्णिकस्येदमन्यत् प्रायश्चित्तं पर्वोक्तवैकल्पिकत्वेन —

**पात्रे धनं वा पर्याप्तं दत्त्वा शुद्धिं निगच्छति ।**
**आदातुश्च विशुद्ध्यर्थमिष्टिर्वैश्वानरी स्मृता ॥ २४४ ॥**

पात्रे विद्यावृत्ततपःसंपन्नाय स्वाजन्यविद्विष्टाभिसन्धिरहितं धनं गोभूतिलहिरण्यादि पर्याप्तं तदीयेभ्यो नित्यतया प्राप्तेभ्यः श्रौतस्मार्तकर्मभ्यो यद्भवति, तद् दत्त्वा शुद्धिं नितरां गच्छति । सर्वप्रायश्चित्तानामिदमेवाभ्यर्हितमित्यभिप्रायः । मानवे तु दानप्रकारापेक्षः प्रपञ्चो न देयविशेषापेक्षः । देयं त्वेतावदेव । तत्र कदाचित् सर्वस्वमेतन्ममेत्येवं निःशेषमर्पयेत् । यदि तु नित्यानुष्ठानसंप्रदानसंबन्धि कार्त्स्न्येनालोच्यातिरिक्तमपि दातुः स्वं स्यात्, ततो यावज्जीवनसंबन्धिविहितश्रौतस्मार्तानुष्ठानाय यत् पर्याप्तं, तावदेव दद्यात् । कदाचित्तावन्मात्रेण द्रव्येण पूरयित्वा सपरिच्छदं गृहं वा दद्याद् इति । अत्र दातुरिच्छाविकल्पः, न द्रव्यपरिमाणे कश्चिद् भेदः । एतच्च कामकृते गुणवद्ब्राह्मणवधे द्रष्टव्यं, पात्रे दातव्यमिति वचनात् । नह्यल्पेन प्रयासेनैवंभूतो ब्राह्मणः शक्यो ग्राहयितुम् । यो हि सम्यग् ग्रन्थतोऽर्थतश्चानुपूर्व्येण न्यायानुसारतश्च वेदं कार्त्स्न्येन वेत्ति, प्रायश्चित्तोपदेशात् साम्भिः स्वकर्मानुष्ठाननिरतः स कथमिव प्रतिगृह्णीयात् । किं वा तादृशे पात्रे एतावद् द्रव्यं दत्त्वा पापान्नापगच्छेत् । अतो गुरुतर एव प्रायश्चित्तं युक्तम् । तच्च दर्शितम् । तस्य चादातुः प्रतिगृह्णानस्य

१. 'ल्पम', २. 'ष्णापे', ३. 'च' ग. पाठः.

विशुद्ध्यर्थं वैश्वानरो द्वादशकपालः पुरोडाशः। चशब्दाद् दातुश्चाहिताग्नेरेव. महाधनस्य तावन्मात्रधनस्यैवेति स्थितम्। श्रौतत्वेऽपि चेष्टेरिष्टिर्वैश्वानरी स्मृतेति स्मृतत्ववचनं मानवेऽनुक्तत्वादपस्मृतित्वाशङ्कानिवृत्त्यर्थम्। सत्यपि तत्रावचने मनुनैवायमर्थः स्मृत इत्यवगन्तव्यमित्यभिप्रायः। तत्रास्यानभिधानं दातुरनियमो यथा स्यादित्येवमर्थम्। तेनानाहिताग्नेरपि सर्वस्वं वा वेदविद इत्येतत् प्रायश्चित्तमस्त्येवेत्येषा दिक्।

ननु चैतानि प्रक्रान्तद्वादशवार्षिकस्यैवाशक्तौ परिसमाप्त्यर्थानीति युक्तम्। तथाच मनुना—"ब्रह्महा द्वादशाब्दानी"त्युपक्रम्य "लक्ष्यं शस्त्रभृतां वा स्याद्" इत्यादि "जपेद्वा नियताहार" इत्येवमन्तमुक्त्वा पुनर्द्वादशवार्षिकसम्बन्धितयैवोक्तं—

"कृतवापनो वा निवसेद् ग्रामान्ते गोव्रजेऽपि वा।
आश्रमे वृक्षमूले वा गोब्राह्मणहिते रतः॥
ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान् परित्यजन्।
मुच्यते ब्रह्महत्याया गोप्ता गोब्राह्मणस्य वा॥
त्र्यवरं प्रतिराद्धो[1] वा सर्वस्वमवजित्य वा।
विप्रस्य तन्निमित्ते वा प्राणालाभे विमुच्यते॥"

इत्येवं ब्राह्मणाद्यर्थप्राणत्यागादिना द्वादशवार्षिकस्य परिसमाप्तिमुक्त्वोपसंहृतम्—

"एवं दृढव्रतो नित्यं ब्रह्मचारी समाहितः[2]।
समाप्ते द्वादशे वर्षे ब्रह्महत्यां व्यपोहति॥"

इति। एवमुपक्रमोपसंहाराभ्यामेकमेवेदं प्रायश्चित्तं सोपस्करमवगम्यते। तथाचोत्तरत्र—

"हत्वा गर्भमविज्ञातमेतदेव व्रतं चरेत्।"

इति। एतदेव प्रकृतं द्वादशवार्षिकमिति सामञ्जस्यं स्याद्, इतरथा चैतदेवेति न ज्ञायते कस्यायं निर्देश इति। आनन्तर्याद् वाश्वमेधावभृथस्यैव स्यात्। तत्र तस्यासंभवः, कादाचित्कत्वात् प्रायश्चित्तस्य च नित्यत्वेनापेक्षितत्वात्। अतः पूर्वपरिसमाप्तावेव विषयव्यवस्थया "लक्ष्यं शस्त्र-

---

१ 'द्धा' ग. पाठ २. 'हृ' ङ. पाठ..

भृताम्" इत्यादीनि द्रष्टव्यानि, न स्वातन्त्र्येण । न च मरणान्तिकं प्रायश्चित्तं युक्तं, कार्यविरोधात् । शुद्ध्यर्थं हि तदिष्यते, जीवतश्च शुद्ध्या कार्यं यतः । न च जीवप्रायश्चित्तस्येतरेण विकल्पो घटते, वैषम्यात् । स्वेच्छया चेतरसंभवे मरणान्तिकमध्यवस्यत आत्मघातदोषोऽपि प्रसज्येत । अत एवापस्तम्बेन — "गुरुतल्पगः सूर्मीं ज्वलन्तीं प्रविश्यात्मानं दहेदि"त्युपक्रम्य "मिथ्यैतदिति हारीत" इति, "यो ह्यात्मानं परं वाभिहन्यते अभिशस्त एव स" इति । अतोऽपि मरणान्तिकमयुक्तम् । यत्र च सवनस्थविप्रवधादौ द्विगुणं व्रतमुच्यते, तत्र द्विर्मरणासंभवात् तदनुपपत्तिरेव स्यात् । अत एकप्रायश्चित्तकल्पनैव युक्तेति । न त्विदमतीव न्याय्यम् । यत्तावदुपक्रमोपसंहारबलमालोच्यैकत्वमुक्तं, तच्छ्रौतैराश्वमेधादिभिर्व्यवधानादयुक्तमेव । नहि द्वादशसंवत्सरोद्देशेनाश्वमेधस्वर्जिदादिवचनान्यवकल्पन्ते । अवश्यं ह्येषां प्रत्यक्षश्रुतिमूलत्वं वाच्यम् । स्मृतौ चैतानि तु । क्रमानुपपत्तेस्तत्र च द्वादशवार्षिकं ब्रह्महत्योद्देशेन प्रकृत्य य एतत् समापयितुं न शक्नुयात्, स एतेनाश्वमेधादिना यजेतेत्येवं क्रतवो विधातव्याः, फलार्थतया वा क्रतून् प्रकृत्य द्वादशवार्षिकाशक्तावपि यजेतेत्येवम् । उभयथापि चायुक्तं, दम्पत्योरधिकारात्, केवलस्य च प्रवृत्तत्वात् । न च भर्तुरशक्त्या पत्न्यपि प्रवर्ततामिति युक्तं, पत्नीशब्दस्य स्वामिवचनत्वाद् अङ्गिनि द्वादशवार्षिके तस्या अनधिकारात् । तत्र यदिवा सह पतेन द्वादशवार्षिकं, यदिवा क्रतूनां तत्राननुप्रवेशः, विधानाद् द्वादशवार्षिकस्य जयाहोमेनेव कृष्यादीनामाहवनीयादिसंयुक्तैः कर्मभिरसंबन्धात् तादर्थ्यकल्पनानुपपत्तिः । अतोऽवश्यं क्रतूनां स्वातन्त्र्यमेव वक्तव्यम् । तथा चाम्नायः— "सर्वां ब्रह्महत्यामपहन्ति, योऽश्वमेधेन यजते । अग्निष्टुताभिशस्यमानं याजयेत् । भ्रूणहत्याया वा एषोऽतिमुच्यते, योऽभिजिता यजेत" इति । एतानि च प्रत्यक्षाण्यतिक्रम्य नानुपलब्धवाक्यान्तरकल्पनायां प्रमाणमस्ति । अतोऽश्वमेधादिचोदनास्तावत् पूर्वप्रक्रमानपेक्षा एव । ताभिर्व्यवहिताः सर्वस्वदानादयस्तद्व्यवहितेन द्वादशाब्देन न सम्बन्धं

१. 'न्तिक' ग पाठः. २. 'क्त्वा मि' ङ. पाठः ३. 'न्यते सोऽभि', ४. 'स्त इ' ग. ङ. पाठ., ५. 'नि क्र', ६. 'त्र यद्वा' ग. पाठः. ७ 'च वृ', ८ 'नि च द्वा' च. पाठः. ९. 'यजाहो' ग. पाठः.

लभन्ते । स्मृत्यन्तरेषु तु "अग्नौ सक्तिर्ब्रह्मशिरवच्छातस्य, लक्ष्यं वा स्याज्जन्ये शस्त्रभृतां, खट्वाङ्गकपालपाणिर्वा —" इति च प्रक्रमालोचनया मरणाशक्तावेव द्वादशवार्षिकं लक्ष्यते । वासिष्ठेऽपि— "ब्रह्महाग्निमुपसमाधाये"ति प्रकृत्य "राजार्थे ब्राह्मणार्थे वाभिमुख आत्मानं घातयेत् त्रिरजितो वा प्रतिराद्धः पूतो भवतीति विज्ञायत" इत्युक्त्वोक्तं द्वादशवार्षिकं "द्वादशवर्षाण्यात्मना व्रतमादिश्य न ग्रामे नारण्ये वसेत् खट्वाङ्गकपालपाणिरि"ति । अत्रापि च प्रक्रमानुसारात् पूर्वानधिकृतस्यैव द्वादशाब्दिकामित्यवगम्यते । अन्यासु तु द्वादशाब्दिकस्यानुपदेश एव । वासिष्ठे च विज्ञायत इति त्र्यवर प्रतिराद्ध इत्यस्य प्रत्यक्षश्रुतिविहितत्वेन द्वादशाब्दाननुप्रवेशः स्पष्टीकृत एव । अतः स्वातन्त्र्येणैव विषयव्यवस्थया सर्वाणि व्याख्येयानि व्याख्यातानि च । यस्तूपसंहारः, स पूर्वोक्तापेक्षया योज्यो न तु तदपेक्षया पूर्वोक्तम्, उक्तस्य ह्युपसंहारः, नोपसंहारादुक्तता । तेन "कृतवापनो वा निवसेदि"त्येवमादेः पूर्वोक्तसमस्तप्रायश्चित्तशेषत्वम् सर्वत्र चायमविरुद्ध एव नियमकलापः । प्रत्युत द्वादशाब्दिक एवारण्ये कुटिं कृत्वेत्यनेन विरोधादस्याननुप्रवेशः । न च विकल्पः सम्भवति, तत्कल्पनायां द्वादशाब्दाननुप्रवेशोऽयुक्तः । यौ त्वनन्तरौ श्लोकौ, ताभ्यां प्रायश्चित्तान्तरत्वेन गोब्राह्मणार्थे प्राणत्यागादीन्युपदिश्यन्ते नतु प्रक्रान्तद्वादशाब्दिकस्य, प्रमाणाभावाद् , वासिष्ठे च त्रिरजितो वेत्यत्र विज्ञायत इत्यनेन श्रौतत्वस्य दर्शितत्वात् । यस्तावदुपसंहारः "एवं दृढव्रतो नित्यमि"ति, अयमपि सर्वशेष एव । एवमुक्तेन प्रकारेणामुना प्रायश्चित्तेन मयात्मा नियमेन शोधनीय इत्येवंरूपं द्वादशाब्दशस्त्रभृल्लक्ष्यभावाग्निप्रवेशक्रत्वनुष्ठानादि यद् व्रतं, तत्र द्वादशाब्दादौ समाप्ते व्रते ब्रह्महत्यां व्यपोहतीत्येवं योज्यः । तथाच परमोपसंहारः समञ्जसो भवति—

"अतोऽन्यतममास्थाय विधिं विप्रः सुयन्त्रितः ।
ब्रह्महत्याकृतं पापं व्यपोहेतात्मवत्तया ॥"

इति । अन्यथैकत्वादन्यतममास्थायेत्यसम्बद्धमेव स्यात् । न चान्यतममग्निप्रवेशादिकं द्वादशाब्दसमाप्तिविधिमास्थायेति युक्तं, तथा सति

१ 'शाब्दिक' च. पाठः २. 'भ्रूणहा' ग च. पाठः. ३. 'र्थे गवार्थे ब्रा' ङ. पाठः. ४. 'मुद्दिश्य' च. पाठः. ५ 'योऽपि चोप', ६. 'रे', ७. 'त्मा शो' ग. पाठः. ८. 'ज्यम् ।' ङ. च. पाठः.

गुणत्वात् प्राधान्येन निर्देशो न स्यात् । न च तत्समाप्त्यर्थता सम्भवतीत्युक्तमेव । यदप्यनन्तर—

"हत्वा गर्भमविज्ञातमेतदेव व्रतं चरेद्"

इति, अत्रानन्तर्यादेवान्यतममास्थाय विधिं ब्रह्महत्याव्रतं चरेदित्यादि योज्यं नतु द्वादशवार्षिकं, व्यवधानेन सर्वनामपरामर्शासम्भवात् ।

"तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतः ।
वैश्येऽष्टमोंऽशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोडशः ॥
अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः ।
ऋषभैकसहस्रा गा दद्याच्छुद्ध्यर्थमात्मनः ॥"

इत्युक्त्वोक्तं —

"त्र्यब्दं चरेद् वा नियतो जटिलो ब्रह्महव्रतम् ।
वसन् दूरतरे ग्रामाद् वृक्षमूलनिकेतनः ॥"

इति । तच्च तुरीयवचनादेव सिद्धे सत्यसम्बद्धं स्यात् । यदि तुरीयवचनात् सर्वस्वचतुर्थभागदानमपि प्राप्नोति, ततो महाधनस्याकामकृते गोसहस्रदानोपदेशः, त्रैवार्षिकं वा व्रतमादिश्येत । इतरथा हि पूर्वश्लोकात् कामकृतेऽपि त्रैवार्षिकस्यापि प्राप्तत्वादकामकृते तद्वचनमसमञ्जसं स्यात् । अतो यथोक्तैव व्याख्या युक्ता । यत्तु कार्यविरोधान्मरणान्तिकमयुक्तमिति, तदपि "भैक्षं चात्मविशुद्ध्यर्थमि"त्यात्मविशुद्ध्यर्थं प्रायश्चित्तं न शरीरशुद्ध्यर्थम् । आत्मद्रव्यमेव प्रायश्चित्तेन संस्क्रियते । तच्च मरणान्तिके इतरत्र चाविशिष्टम् । यत्तु वैषम्याद् विकल्पो मरणान्तिकस्येतरेणायुक्त इति, तत् पुरुषाणां बुद्धिवैचित्र्यादकारणमेवेत्युक्तम् । यत्तु स्वेच्छया प्रायश्चित्तान्तरे सम्भवति मरणमध्यवस्यत आत्मघातकत्वप्रसङ्ग इति, तत् पश्वेकादशिन्यामप्येकेन पशुना सह विकल्पेनोपदिष्टायामनेकप्राणिवधे दोषोत्पत्तिः प्रसज्येत । सुरायाश्चाग्निवर्णैरुदकगोमूत्रादिभिः सह वैकल्पिकत्वे स्वेच्छयोपादाने दोषः स्यात् । द्वादशाब्दसमाप्त्यर्थत्वेऽपि चायं तुल्यो दोषः । विषयविभागकल्पना चोभयत्र तुल्यैव । आपस्तम्बवचनं तु ब्राह्मणस्य मरणान्तिकनिवृत्त्यर्थं प्रकारान्तरेण वा मरणान्तस्योपदेशार्थम् "ओत्तमादुच्छ्वासादि"ति । अन्यथा मरणान्तस्योपदेशानामप्रामाण्यमेव स्यात् । गुरुतल्पावसरे च निपुणतरं वक्ष्यामः । यत्तु द्विगुणं व्रतमिति द्विर्मरणानुपपत्तिः, तत्र सामर्थ्याज्जीव-

१. 'हि' ङ., 'नहि स' च. पाठः.

प्रायश्चित्तानां प्रयोगावृत्तिकल्पना नतु द्वादशाब्दिकमात्रसम्बन्धिता इत्यलं प्रसङ्गेन ॥ २४४ ॥

इदानीमातिदेशिकान्याह—

**यागस्थक्षत्रविड्घाते चरेद् ब्रह्महणो व्रतम्।**
**गर्भहा च यथावर्णं तथात्रेयीनिषूदकः ॥ २४५ ॥**

यागस्थवचनं प्रयोगमध्य एव दोष इत्येवमर्थम् । यागशब्दश्चायं सोमयाग एव द्रष्टव्यः । "सवनगतौ च राजन्यवैश्यावि"ति स्मृत्यन्तरात् । तथाचाम्नायः — "तस्मादाहुर्न सवनगतं हन्याद् एनस्वीहैव सवनकृते"ति ज्योतिष्टोमप्रकरणे चैतद्दीक्षितोऽयं ब्राह्मण इत्यावेदनशेषत्वेन । अतश्चावेदनोत्तरकालं दोष इति केचित् । ऋत्विग्वरणप्रभृत्येव तु युक्तं, सवनगत इत्यत्र भूतार्थस्याविवक्षितत्वात्, क्रतुप्रवृत्तिरेव विवक्ष्यते यतः । इतरथा तु निर्वृत्तयागस्यैव स्यात् । यत्तु "आवेदनेन हि ब्राह्मणो जायते, यो यज्ञाज्जायते" इति, अर्थवादमात्रं तत् । मानवे तु "राजन्यवैश्यौ चेजानावि"ति कर्तृत्वमात्रविवक्षयैव, न कृतयागत्वविवक्षयेत्येवं योज्यम् । अथवा सवनकृच्छ्रुतेरीजानाविति मनुवचनादिष्टवतोरेव दोषः । इह स्ववचनाच्च प्रयोगमध्येऽपीति व्याख्येयम् । ब्रह्महणो व्रतं च द्वादशाब्दिकादिपर्याप्तधनदानान्तं पूर्ववद् विषयव्यवस्थया योज्यम् । गर्भहन्ता च यद् यस्य वर्णस्य वधे प्रायश्चित्तं, तदेव तदीयगर्भवधे कुर्यात् । तथात्रेया हत्वा तद्वर्णविहितं कुर्यात् । आत्रेयी च रजोदर्शनादारभ्याषोडशान्यहान्युच्यन्ते । तस्याश्च सन्निहिते भर्तरि प्राक् सम्प्रयोगादेतद् द्रष्टव्यं, वासिष्ठे "अत्र ह्येष्यदपत्यं भवती"ति श्रुत्युपन्यासात् । अन्ये तु तथात्रेयीनिषूदक इत्यत्र चरेद् ब्रह्महणो व्रतमित्येतद् योजयन्ति, न त्वनन्तरं यथावर्णमिति, आत्रेयीं चात्रिगोत्रां वर्णयन्ति, तदपि युक्तमेव । तथाचाम्नायः — "ततोऽत्रिः सम्बभूवे"त्युक्त्वा "तस्मादप्यात्रेय्या योषितैनस्विनमाहुः" । तेनोभे सम्यग्व्याख्याने एव । स्पष्टमन्यत् ॥ २४५ ॥

इदं चान्यदातिदेशिकमेव—

**चरेद् व्रतमहत्वापि घातार्थं चेत् समागतः ।**
**द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमाचरेत् ॥ २४६ ॥**

१. 'कृ' क. ग. पाठः. २. 'तृंमा', ३. 'व यु' ङ. पाठः. ४. 'गवि' ग. पाठः.

अवश्यमस्माभिरसौ ब्राह्मणो हन्तव्य इत्येवं घातार्थं बहूनां समागतानां निष्पन्ने च ब्राह्मणवधे येनाप्यसौ न घातितः, सोऽपि पूर्वोक्तविषयव्यवस्थाकल्पितं व्रतं चरेदेव । प्रहृते च सत्येतद् द्रष्टव्यम् । अप्रहृते तु —

"बहूनां समवेतानां ब्राह्मणादिवधं प्रति ।
यस्य प्रहाराद् व्यापत्तिः स दुष्येन्नेतरस्तथा ॥"

इति हारीतोपदेशात् । तथाशब्दाच्च तद्वत् पतितो भवति, नतु न दुष्यतीति गम्यते । सवनस्थे द्विगुणमित्यत्रापि न प्रायश्चित्ताभ्यासः । किं तर्हि, गुरुतरं तत्र प्रायश्चित्तम् । ततश्च यथापस्तम्बेनोक्तम् "एतेनैव विधिना आ उत्तमादुच्छ्वासाच्चरेदि"त्येवमादि द्रष्टव्यम् । प्रायश्चित्तद्वयं वा "सर्वस्वं दत्त्वा द्वादशाब्दिकं वा कृत्वा ततो मरणान्तिकमि"त्यादिना प्रकारेण । इतरथा तु द्विर्व्रतमादिशेदित्येवावक्ष्यद्, नतु द्विगुणमिति । सवनस्थे च यजमान एवेदं नर्त्विजीति । तत्रापि तु दोषातिरेकोऽस्त्येव[1] प्रायश्चित्तं तु तत्र तदनुरूपं कल्प्यम् । अन्ये तु अन्यथेमं श्लोकं वर्णयन्ति —

चरेद् व्रतमहत्वापि घातार्थं चेत् समागतः ।

सम्यग् बुद्धिपूर्वं वधप्रयोजनं वस्तु कृत्वेति यावत् । येन कृतेनातिशयेन ब्राह्मणस्य स्वयमेव वधे प्रवृत्तिर्भवति. तत् क्रोधोत्पादनं द्रव्यहरणादि । यद्यपि ब्राह्मणो म्रियतामित्यनया बुद्ध्या न कृतं, तथापि तस्मिन् द्रव्यापहरणादौ कामतः कृते यदि निमित्तान्तरानपेक्षिणी ब्राह्मणस्य प्राणविपत्तिः स्यात्, तदा व्रतं ब्रह्महत्यासंबन्धि यत्, तदहत्वापि चरेदिति । एतदेव मानवेऽप्युक्तं —

"उक्त्वा चैवानृतं साक्ष्ये प्रतिरभ्य गुरुं तथा ।
अपहृत्य च निक्षेपं कृत्वा च स्त्रीसुहृद्वधम् ॥"

इति । यत्रानृते साक्ष्ये ब्राह्मणस्य स्वतोऽन्यतो वा प्राणविपत्तिः, तथापि तथाविधमनृतमुक्त्वा तत्प्रकारेणैवाभिशापादिना गुरुं प्रतिरभ्य प्रकोपयित्वा संयोज्य वा ब्रह्महत्याव्रतं चरेदेव । गुरौ चाब्राह्मणेऽप्येतद् द्रष्टव्यम् ।

१. 'त्यर्थ' ।य', २. 'मक्र' ग. पाठः. ३. 'ल' च. पा॰

निक्षेपं च मरणहेतुभूतं ब्राह्मणस्यापहृत्य, स्त्रियं वा ब्राह्मणस्य, मरणहेतुभूताम् अब्राह्मणीमपि हृत्वा, सुहृदं चाब्राह्मणमप्येवम्भूतं हत्वा, ब्रह्महत्याव्रतं कात्स्न्येन चरेदित्यभिप्रायः । तथाशब्दश्चात्र प्रकारार्थः । अन्यदप्येवम्प्रकारं मरणकारणं ब्राह्मणस्योत्पाद्येत्येवमर्थः । तथाच गौतमः "दुर्बलहिंसायां चापि मोचने शक्तश्चेदि"त्येवमर्थमेवाह । एतच्च क्षत्रियादिष्वपि योज्यम् । सवनस्थे चैतदेव द्विगुणम् इत्येषा दिक् ॥ २४६ ॥

इदानीं सुरा प्रत्याह —

**सुराम्बुघृतगोमूत्रपयसामग्निसंनिभम् ।**
**सुरापोऽन्यतमं पीत्वा मरणाच्छुद्धिमृच्छति ॥२४७॥**

सुरां पानीयं गव्यं वा घृतं मूत्रं पयो वा गव्यमग्निसंनिभं दहनक्षमं पीत्वा तेनैव[1] निर्दग्धः सुरापो मरणाच्छुद्धिं गच्छतीति श्लोकार्थः । अत्र च पैष्ट्यामेव सुराशब्द इत्येतद् "ब्रह्महा मद्यपः स्तेन" इत्यत्रोक्तमेव । त्रयाणां च वर्णानां मतिपूर्वे सुरापान एवैतत् प्रायश्चित्तं, ब्राह्मण्याश्च । क्षत्रियवैश्ययोषितां पुनर्नैतत् प्रायश्चित्तं,

"सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत् ।"

इति द्विजस्यैव प्रायश्चित्तोपदेशात्, स्त्रीणां चाद्विजत्वात् । कथं तर्हि ब्राह्मण्याः

"पतिलोकं न सा याति ब्राह्मणी या सुरां पिबेत् ।"

इति, आरम्भसामर्थ्यात् । गौतमे च — "सुरापस्य ब्राह्मणस्योष्णामासिञ्चेयुः सुरामास्ये मृतः शुध्येदि"त्यत्र स्त्र्यर्थमेव ब्राह्मणग्रहणं कृतम् । अन्यथा तु द्विजस्येत्येवावक्ष्यत् । न च क्षत्रियवैश्यव्यावृत्त्यर्थं तदिति युक्तं, मानवे द्विजवचनात् । नोपसंहारार्थं, प्रतिषेधश्लोके त्रयाणां पृथगुपादानात्,

"सुरा वै मलमन्नानां पाप्मा च मलमुच्यते ।
तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥"

इति । तेन गौतमीये ब्राह्मणस्येति प्रायश्चित्तस्य ब्राह्मणजातिमात्रसंबन्धार्थम् । न च पुंलिङ्गनिर्देशात् पुंसो ब्राह्मणस्येति युक्तम्, उपादानानर्थ-

1. 'तेन नि' ग. च. पाठ.,

क्यप्रसङ्गादित्युक्तम् । अत एव मानवे पृथक् प्रतिषेधश्लोकारम्भः । अन्यथा तु ब्रह्महत्यायामिव प्रायश्चित्तोपदेशादेव सिद्धेरनर्थकः स्यात् । तेनात्र सुराप इत्यविशेषाभिधानेऽपि स्मृत्यन्तरानुसारादेवं व्याख्येयम् । गौलमाध्व्योस्तु ब्राह्मणसंबन्धितयैव प्रतिषेधाद् द्विजसंबन्धित्वाच्च प्रायश्चित्तस्य नेदं प्रायश्चित्तं, सुरासंबन्धेन चोपदेशात् "सुरां पीत्वा द्विजो मोहादि"ति । इतरयोश्चासुरात्वात् । अतो गौलीमाध्व्योः कामतः पाने वासिष्ठं "मद्यपाने त्वसुरायाः सुरायाश्चाज्ञाने कृच्छ्रातिकृच्छ्रौ[1] घृतप्राशः पुनः संस्कारश्चे"ति । एवमन्यान्यपि सुरापानवाक्यानि योज्यानि ॥ २४७ ॥

एवं कामकृते त्वभ्यासे मरणान्तिकं प्रायश्चित्तमुक्तम् । अधुना कामकृत एवानभ्यासे प्रायश्चित्तमाह—

**बालवासा जटी वापि चरेद् ब्रह्महणव्रतम् ।**
**पिण्याकं वा कणान् वापि भक्षयीत समां निशि ॥२४८॥**

ब्रह्महत्याव्रतं समां चरेदित्येवं योज्यम् । न च प्रायश्चित्तद्वयोपदेशभ्रान्तिः कर्तव्या, मानवैकवाक्यत्वात्

"कणान् वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि ।
सुरापानापनुत्त्यर्थं बालवासा ध्वजी जटी ॥"

इति ।

"सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत् ।"

इत्येतस्मात् प्रकृतेऽपि पुनः सुरापानापनुत्त्यर्थम्[2] इति सकृत्पानायैव भगवतोक्तम् । अतः कामकृत एव सकृत् सुरापाने एतदिति स्थितम् । शाङ्खेऽपि "सुरापोऽग्नितप्तसमस्पृश्यमुदकं पिबेत् स तेन निर्दग्धकायः शुद्धिमाप्नोती"ति कामकृताभ्यस्तपानविवक्षयाभिधाय तत आह— "अथवा बालचीरवासाः सुरापः खट्वाङ्गी गुरुतल्पगश्च ब्रह्महत्याव्रतमेव चरेयातां, तौ तावता कालेन शुद्धिमाप्नुतः" इत्येतदेव सांवत्सरिकमुक्तं, न तु द्वादशाब्दिकम् । तत्र तावता कालेनेत्येतदवक्तव्यमेव स्यात् । अतो यत् पूर्वं "पतितो ह्यात्मानमुद्धरेत्, संवत्सरं तप्तकृच्छ्रमाचरेदि"त्यादि ब्रह्महत्याविहितं, तदेवाचरेदित्यभिप्रायः । एवं मनुना सहैकवाक्यता सिध्यति । अन्यथा तु तद्विरोधात् प्रतिज्ञातार्थविरोधः स्यात् । यदुक्तं —

१. 'च्छ्रु पु' ग. च. पाठः २. 'नमेत' क. ङ. च. पाठः.

"समीक्ष्य निपुणं धर्ममृषिभ्यो मनुभाषितम्।
आम्नायात् सम्यगुद्धृत्य शङ्खश्च लिखितस्तथा॥"

इति। सांवर्तेऽप्येतदेवोक्तं—

"वत्सरं वा कणानश्नन् सर्वान्नरसवर्जितः।"

इति। अत्र विशेषो "बालवासा जटी कणपिण्याकयोरन्यतरद् रात्रौ सकृदश्नन्" इति। आपस्तम्बोक्तं तु—"सुरां पीत्वा स्तेयं कृत्वा गुरुतल्पं च गत्वा ब्रह्महत्यामकृत्वा चतुर्थकालं मितभोजिनस्त्रिरपोऽभ्यवयन्तस्त्रिभिर्वर्षैः शुध्यन्त" इति। एतच्च समुच्चितविषयम्। अन्यथा ब्रह्महत्यामकृत्वा इत्येतदवचनीयं स्यात्। अतस्त्रितयमप्यबुद्धिपूर्वं कथञ्चित् कृत्वापस्तम्बोक्तम्। यद्यप्याङ्गिरसे वज्राख्यं व्रतं प्रकृत्योक्तं—

"महापातकसंयुक्ता वर्षैः शुध्यन्ति ते त्रिभिः।"

इति, तद् ब्रह्महत्याविषयमेव द्वादशाब्दिकवैकल्पिकं विदुषां ब्राह्मणानामेव द्रष्टव्यम्। सुरापाने तु—

"कालस्य तु यथोक्तस्य ब्राह्मणा एव कारणम्।"

इति तत्रैव यदुक्तं तद् द्रष्टव्यम्। ब्राह्मणा एव कारणमिति वदन् स्मृत्यन्तराधीनः कालनियम इत्येतदेव ज्ञापयति। एवमन्यान्यपि स्मृत्यन्तरोक्तानि सुरापानप्रायश्चित्तानि योज्यानि॥ २४८॥

एवं मतिपूर्वेऽभ्यासे मरणान्तमनभ्यासे च संवत्सरं ब्रह्महत्याव्रतं कणादिभोजनयुक्तमुक्त्वा अथेदानीममतिपूर्वे वक्तुमाह—

**अज्ञानात् तु सुरां पीत्वा रेतो विण्मूत्रमेव वा।**
**पुनः संस्कारमर्हन्ति त्रयो वर्णा न संशयः॥ २४९॥**

अज्ञानादिति। प्रतिषेधाज्ञानं यदि स्यात्। तथा रेतोविण्मूत्रेष्वपि। ततस्त्रयो वर्णाः संस्कारमुपनयनं कृतोपनयनाः सन्तोऽपि पुनरप्यर्हन्ति। न चात्र स्वल्पमिदं प्रायश्चित्तम्, अतोऽन्यदपि किञ्चित् कल्प्यमित्येतद् न संशयः इत्यनेन स्पष्टीकृतम्। यस्तु प्रतिषेधं जानाति, सुरेयमिति ज्ञात्वा पिबति, तस्याप्यनभ्यासे वासिष्ठम्। एवं मूत्रादिष्वपि योज्यम्। प्रागुपनयनात्त्वज्ञातसुरापाने तेनैवोपनयनसंस्कारेण शुद्धिः। यथाह मनुः—

"अज्ञानाद् वारुणीं पीत्वा संस्कारेणैव शुध्यति।"

इति । अत्र पुनःशब्दाभावाद् आद्य एव संस्कारोऽभिप्रेतः । तथाचान्यत्र पुनःशब्दः कृतः—

"अज्ञानात् प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च ।
पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥"

इति । द्विजातिवचनात् पुनःशब्दाच्च कृतोपनयनानामेवैतज्ज्ञायते । अतश्च "संस्कारेणैव शुध्यती"त्येतदाद्यसंस्कारविषयं द्रष्टव्यम् । गौतमीयात्तु प्रतिषेधाद् "मद्यं नित्यं ब्राह्मण" इति प्रागप्युपनयनाद् दोषोऽस्ति, न तु तत्र प्रायश्चित्तान्तरं. "संस्कारेणैव शुध्यती"ति वचनात् । अतश्चैतदपि श्लोकार्धमनुपनीतस्यैवेति केचित्,

"मतिपूर्वमनिर्देश्यं प्राणान्तिकमिति स्थितिः ।"

इति । अयमस्यार्थः—यद्यनुपनीतः सन्नज्ञानादकामतो वारुणीं पैष्टीं सुरां पिबेत्, ततः संस्कारेणैव शुध्यतीति, मतिपूर्वं त्वनिर्देश्यं पीत्वा प्राणान्तिकं तस्यापि प्रायश्चित्तमिति स्थितिः इति, नात्र प्रायश्चित्तान्तरमालोच्यमित्यभिप्रायः । अनिर्देश्यमित्येतत् पानविशेषणं, तावदनेकशः कामकारेण पिबति यावन्निर्देष्टुं न शक्यते, कतिकृत्वः कियत्परिमाणं वेति यावत् । अन्येऽप्येतदविशेषेणैव वर्णयन्ति—नानुपनीतस्यैवेति, तत्तु "सुरां पीत्वा द्विजो मोहादि"त्यनेनैव सिद्धत्वान्नातीवोपयुज्यत इति पूर्वव्याख्यैव युक्ता । सुरासंस्पृष्टप्राशने चोपनीतस्य संस्कारोपदेशाद् दण्डापूपिकया सिद्धेर्नातीव तद्विषयता स्यात् । अतोऽपि यथोक्तैव विषयकल्पना इत्येषा दिक् ॥ २४९ ॥

ब्राह्मण्या अप्येतदेव सुरापाने प्रायश्चित्त संस्कृतासंस्कृतविषयत्वेन यथार्हं कल्प्यमित्येतत् प्रतिपादयितु निन्दार्थवादोपन्यासेनाह—

**पतिलोकं न सा याति ब्राह्मणी या सुरां पिबेत् ।**
**इहैव सा शुनी गृध्री सूकरी चोपजायते ॥ २५० ॥**

पतिव्रतात्वेनार्जितमपि पतिलोकं न सा गच्छति, या ब्राह्मणी सुरां पिबेत् । सुराशब्दश्चायं मद्यमात्रोपलक्षणार्थो न मुख्यसुराप्रतिपत्त्यर्थः, अर्थवादगतत्वात् । यदि हि विधायकवाक्यगतः स्यात्, ततो मुख्यार्थ एव गृह्येत । अर्थवादे तु मद्यमात्रं निन्दितुं सुराशब्देनोच्यते । ननु चाबुद्धिपूर्वप्रभवत्वाद् वेदस्यार्थवादत्वेन व्याख्यानं युक्तं, पौरुषेयेषु पुनर्वचनेष्व-

र्थवादत्वमबुद्धिपूर्वकारितामेवावहति । सत्यं, यद्यर्थवादमात्रविवक्षयैव प्रयुज्येत । स्मृतिकारास्तु न प्ररोचनामात्रपर्यवसायित्वेनार्थवादान् प्रयुञ्जते, किन्तर्हि, कार्यविशेषप्रतिपत्त्यर्थमेव । अत एव प्रायश्चित्तविधानार्थ एवायं श्लोक इति व्याख्यातम् । लक्षणव्याख्यानसिद्ध्यर्थमर्थवादप्रकारेणोपन्यासः । अतश्च पतिलोकं न सा यातीति वचनाद् भर्तुर्निर्दोषत्वमिति गम्यते । यत्तु स्मृत्यन्तरं —

"पतत्यर्धं शरीरस्य भार्या यस्य सुरां पिबेत् ।
पतितार्धशरीरस्य निष्कृतिर्न विधीयते ॥"

इति, तद् भार्याशब्दश्रवणादपरित्यजतः पतितसंप्रयोगाद् द्रष्टव्यम् । इह तु भर्त्रा परित्यक्ता सती या पिबति, सा पतिलोकं न यातीति व्याख्येयम् । सा हि घोरान् नरकाननुभूय पुनरपीहैव लोके शुनी गृध्री ग्रामसूकरी चेत्येवंविधासु तिर्यग्योनिष्वा प्रलयात् पुनः पुनरुत्पद्यते नोत्क्रुष्यते इत्यभिप्रायः । एवं ब्राह्मण्या मतिपूर्वेऽन्यत्र वा सकृदभ्यासे सुरापाने मद्यपाने च ब्राह्मणवत् प्रायश्चित्तकल्पना । क्षत्रियावैश्ययोस्तु मुख्यसुरापाने सुमन्तुनोक्तं—"सुरापस्य प्रायश्चित्तं षण्मासं वृतसमुद्रौकःस्नानं सावित्र्या दशसहस्रसंपातः शिरस्यन्ते सान्तपनं सर्वकृच्छ्रेण शुद्धो भवति" । अस्यार्थः— सुरां यः पीतवान् प्रकर्षेण मतिपूर्वं च स सुरापः । असाधारण्ये हि समासो भवति । अतस्तत्सिद्ध्यर्थं बुद्धिपूर्वेऽभ्यासे चेत्युक्तम् । तस्य सुरापस्य प्रायश्चित्तं षण्मासम् । वृतसमुद्रौकःस्नानम् ओको निवासः समुद्र ओको निवासो यासां नदीनां ताः समुद्रौकसः, समुद्रगामिन्य इत्यर्थः । वृताश्च समुद्रौकसश्च वृतसमुद्रौकसः, तासु स्नानं वृतसमुद्रौकःस्नानम् । वृताश्च कटादिभिः परिवेष्टिताः । समुद्रगामिन्यां कटादिपरिश्रिते गुप्ते स्नानमित्यर्थः । षण्मासस्य चान्ते दशभिर्गायत्र्याः सहस्रैः शिरस्युदकमोक्षः सान्तपनं च । एकस्मिन्नहनि पञ्चगव्यं पीत्वोपवासः, अन्यस्मिन्नपीत्वेत्येतत् । नात्र महासान्तपनं, षण्मासमपि कृच्छ्रेण प्राजापत्येन तप्तकृच्छ्रेण वावस्थानम् । एतच्च यद्यप्यविशेषेणोक्तं, तथापि क्षत्रियवैश्ययोषितामेव द्रष्टव्यम् । कुतस्तत्,

"प्रायश्चित्तार्धमर्हन्ति स्त्रियो व्याधित एव च ।"

इति स्मृत्यन्तरात् । कृच्छ्राब्दं च द्विजानां विहितं तदर्धं चैतत् । अतः पुंसामसम्भवात् स्त्रीणामेवंविधानां च बालवृद्धातुराणां च । एवञ्च परि-

१, २. 'कु' ग. पाठः.

श्रितस्नानस्य स्पर्शादिसम्बन्धादौचित्यं समर्थितं स्यात् । अत्रापि च ब्राह्मण्याः पुरुषवत् प्रायश्चित्तोपदेशादितरयोरित्येषा दिक् । सकृत्पाने तु मतिपूर्वे कृच्छ्रं चान्द्रायणं च । अमत्या कृच्छ्रमेव । यथाह मनुः—

"एतदेव व्रतं कुर्याद् योषित्सु पतितास्वपि ।
वस्त्रान्नमासां देयं तु वसेयुश्च गृहान्तिके ॥"

इति । अन्यस्यात्रानन्तरस्य व्रतस्यानुपदेशात् पतितपरित्यागोद्धारश्लोकव्यवहितमपि स्त्रीसंबन्धितयैव विहितं व्रतम् एतदेव व्रतं कुर्यादित्यनेन निर्दिश्यते । तत्र चोक्तं —

"सा चेत् पुनः प्रदुष्येत सदृशेनोपमन्त्रिता ।
कृच्छ्रं चान्द्रायणं चैव तदस्याः पावनं स्मृतम् ॥"

इति । अत्र चशब्दैवशब्दाभ्यां व्यस्तसमस्ततया प्रयोगो विज्ञायत इति विषयव्यवस्थया व्याख्यातमिति । एवमन्यान्यपि सुरापप्रायश्चित्तानि व्याख्येयानि । केचित्तु स्त्रीणां मद्यपाने नैव दोष इति वर्णयन्ति,

"यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम् ।
तद् ब्राह्मणेन नात्तव्यं देवानामश्नता हविः ॥"

इति प्रतिषेधे पुंयुक्तसंयोगश्रवणात् । तत्तु जातिमात्रविवक्षयैव न लिङ्गविवक्षार्थं, ब्राह्मणस्याविधेयत्वाद् ब्राह्मणजात्युपलक्षितस्य पानानुवादेन प्रतिषेधो विधीयते । न च लक्ष्यमाणस्य विशेषणं विवक्ष्यत इति न्यायविदः । अन्ये तु ब्राह्मणशब्दमप्युपलक्षणं मन्यमानाः शूद्रस्यापि पानप्रतिषेधं वर्णयन्ति, हेतुवन्निगदानामविशेषाद्,

"अमेध्ये वा पतेन्मत्तो वैदिकं वाप्युदाहरेत् ।"

इति । शूद्रस्याप्येतत् किल संभवत्येव । अपिच तस्यैव वैदिकोदाहरणे दोषः स्वस्थावस्थायाम् । अतस्तस्यैव मत्तस्य सतस्तत्प्रसङ्गो मा भूदिति सुतरां हेतुः समञ्जसो भवतीति । अत्राप्युपलक्षणत्वे हेतुर्वक्तव्यः । सुराशब्दस्याप्यन्नमात्रोपलक्षणत्वं किमिति न स्यात्, तस्याप्यत्यशनाद् विषूचिकादिना अवश्यमेवायं हेतुरमेध्ये वा पतेन्मत्त इति । अतो यत्किञ्चिदेव । उत्तरश्लोके च—

"यस्य कायगतं ब्रह्म मद्येनोप्लाव्यते सकृत् ।
तस्य व्यपैति ब्राह्मण्यं शूद्रत्वं च निगच्छति ॥"

इति यदुक्तं, तच्छूद्रस्य नोपपद्यत इति कृत्वा विचारणीयम् । देवाना-

मश्नता हविरित्येतत्तु क्षत्रियवैश्ययोरपि वैतानिकाग्निसंस्कृतभक्षणप्रतिषेधादनुपपन्नम् । किमुत द्रव्यस्य । अथ पाकयज्ञसंबन्धेन क्षत्रियवैश्ययोः शूद्रस्यापि पाकयज्ञीयं यद् देवानां हविस्तदश्नता इत्युच्येत, तथा सति व्यावर्त्याभावादनर्थकमेव स्यात् । अतो यत्किञ्चिदेव । तथान्ये मद्यशब्दं मदयोगनिमित्तं व्याचक्षते । ततश्च सन्धानानन्तरमनुत्पन्नायां मदशक्तौ पश्चाद्वापगतायां ब्राह्मणस्याप्यदोष एवेति । तथाच किल क्वचिदेवमाचरन्ति। यत्र तु नाचर्यते, तत्र मद्यभाण्डस्थितमिति कृत्वा । तत्तु मदनीयेऽपि कोद्रवौदनादावप्रयोगाद् विशिष्टसामग्रीजन्यतयैव परिग्राह्यं मदस्योत्पादकं किण्वादिसामग्र्युपलक्षितम् । सन्धानद्वारेणैव मद्यशब्दस्य प्रयोगो लौकिकानाम् । लोकश्च शब्दार्थाधिगमहेतुरिति नातीव क्लेशनीयम् । यथैवार्यावर्तनिवासिशिष्टव्यवहारस्थितिः, तथैव स्मृत्यर्थोऽनुसर्तव्यो न तद्विपर्ययेण। विशेषतस्तु महापातकाधिकारे इत्यलं प्रसङ्गेन ॥ २५० ॥

इदानीं क्रमप्राप्त सुवर्णस्तेयप्रायश्चित्तं वक्तुमाह—

**ब्राह्मणस्वर्णहारी तु राज्ञे मुसलमर्पयेत् ।**
**स्वकर्म ख्यापयंस्तेन हतो मुक्तोऽपि वा शुचिः॥ २५१ ॥**

ब्राह्मणसात्कृतं स्वर्णमपहरति यः स आत्मनो विशुद्ध्यर्थं राजान्तिकं स्वयमेव मुसलं गृहीत्वा गच्छेत्, ततश्च स्वकर्म यथावृत्तं निःशेषं निर्व्याजं च ख्यापयित्वा तन्मुसलं राज्ञे समर्पयेद्— अनेन मां भवान् शास्तुमर्हतीति । ततो राज्ञा तेन मुसलेन हतः शुध्येत् । यदिवा कथञ्चिन्मरणान्तिकप्रायश्चित्तानर्होऽयमिति कृत्वा कृपया वा न हन्यात्, तथापि राज्ञा मुक्तो विसर्जितो दण्डेन वा मुक्तः शुचिरेव स्याद्, नैव प्रायश्चित्तान्तरं कुर्यादित्यभिप्रायः । तुशब्दाच्च सुवर्णहरणमात्रमेव कृत्वैतत् । येन त्वपहृत्योपयुक्तं, न च प्रतिनिर्यातयितुं क्षमः, तस्यैतन्नैव शुद्धिसाधनमित्यभिप्रायः । श्रौतं तु तस्यापि भवत्येव । यथाह वसिष्ठः— "ब्राह्मणसुवर्णहरणे प्रकीर्य केशान् राजानमभिधावेत्—स्तेनोऽस्मि भोः शास्तु मां भवानिति । तस्मै राजौदुम्बरं शस्त्रं दद्यात्, तेनात्मानं घातयेद् मरणात् पूतो भवतीति विज्ञायते । निष्कालको वा घृताक्तः करीषाग्निना पादात्

१. 'माह' च पाठः. २. 'मा' ग. पाठः ३. 'स्मि शा' च. पाठ' ४' 'मां', ५. 'क्रा' ङ. पाठः ६. 'प' ग. च. पाठ..

प्रभृत्यात्मानं दाहयेद् मरणात् पूतो भवतीति विज्ञायते'' इति। अत्र विज्ञायत इति श्रुत्युपन्यासादेतद्व्यतिरेकेण स्मृतेर्विषयकल्पना न्याय्या। तत्र तु-शब्दाभावादुपयोगपर्यन्त एव हरण इति गम्यते। ब्राह्मणसुवर्णहारी त्विति तुशब्दसामर्थ्यात् प्रतिनिर्यातनशक्तस्यैव हरणे सत्येतदित्यवगम्यते, राजाभिगमनेच्छातः सर्ववर्णानाम्। राज्ञा त्वब्राह्मणानामेव वधः कार्यः, ब्राह्मणस्तु दण्डेन मोक्तव्य इति केचित्। तत्त्वयुक्तं, ब्राह्मणोद्देशेनैवास्योक्तत्वात्। तथाचाह मनुः —

"सुवर्णस्तेयकृद् विप्रो राजानमभिगम्य तु।
स्वकर्म ख्यापयन् ब्रूयान्मा भवाननुशास्त्विति॥
ततो मुसलमादाय स्वयं हन्यात् तु तं नृपः।
वधेन शुध्यति स्तेनो ब्राह्मणस्तपसैव वा॥"

इति। न चात्र विप्रग्रहणस्यान्यार्थत्वं शक्यते वक्तुम्, आनर्थक्यप्रसङ्गाद्, अन्तरेणापि विप्रग्रहणं स्तेनमात्रस्य लब्धत्वात्। न च राजाभिगमनमात्रं विप्रस्योक्तं वधस्त्वन्यविषय इति युक्तं,

"ततो मुसलमादाय स्वयं हन्यात्तु तं नृपः।"

इत्यत्र शास्त्विति वचनात् तमेव प्रकृतं विप्रमिति गम्यते। यत्तु ब्राह्मणस्तपसैव वेत्येवकारसामर्थ्याद् ब्राह्मणस्य तप एव, अन्यस्य तु वधस्तपो वेति वर्णयन्ति। तदप्यन्यस्यात्राप्रकृतत्वान्निर्युक्तिकमेव स्यात्। एवकारस्तु तपसो वधेन सहातुल्यार्थत्वात् कल्पान्तरप्रसङ्गनिवृत्त्यर्थः, तपसैव वा केवलेन शुध्यति, वधेन वा राजान्तिकगमनद्वारेणेति। ततश्चेच्छन् ब्राह्मणो राजानमुपगच्छेत्, तेन हतो मुक्तो वा शुध्येद्, यद्वा राजान्तिकमगत्वैव तपः कुर्यात्। तच्च तपः संवर्तोक्तं —

"स्वतन्त्रस्तु स सन्ताप्य सुवर्णस्तेयजं मलम्।
चीरवासा द्विजोऽरण्ये चरेद् ब्रह्महणव्रतम्॥"

इति। अरण्यवासश्च लिङ्गाद् द्वादशवार्षिकमेव स्याद्। यद्वा सर्वब्रह्महत्याव्रतातिदेश एवायम्। तथाचोपसंहारे "एतैर्व्रतैरि"ति बहुवचनमुपपन्नं भवति। अन्यथा तु द्विवचनमेव स्यात्। द्विजग्रहणाच्चोपनीतस्यैवैतत्। अनुपनीतस्य त्वदोष एवेत्यभिप्रायः। यत्तु क्षत्रियादीनां प्रायश्चित्तान्त-

१ 'च-म'-ग-च. पाठः

रानुपदेशाद् विप्रग्रहणमुपलक्षणमिति व्याचक्षते। ते "ब्राह्मणो न हन्तव्यः" "सुरा न पेया" इत्येवमादिष्वपि ब्राह्मणादिशब्दान् हन्यमानमात्रोपलक्षणार्थान् यन्न वर्णयन्ति, तत् किमप्याश्चर्यम्। राजानमभिगम्येत्यत्र वा राजशब्दमनुशासकमात्रलक्षणयाचार्याद्यर्थं किमिति न व्याचक्षते । ये तु ब्राह्मणवधो राज्ञो न युक्त इति क्षत्रियादीनामेवंजातीयकमिति ब्रुवते, ते नूनं चोदनाव्यापारनिरपेक्षा एव स्वयं धर्माधर्मौ जानन्तीत्यप्रतिसमाधेया एवेत्यलं प्रसङ्गेन ॥ २५१ ॥

इदानीमत्रैव प्रायश्चित्तान्तरमाह —

**अनाख्याय नृपे शुद्ध्यै सुरापव्रतमाचरेत् ।**
**आत्मतुल्यं सुवर्णं वा दद्याद् वा विप्रतुष्टिकृत् ॥२५२॥**

अनिवेद्यैव राज्ञे सुरापव्रतेन[1] शुध्येद् इति[3] । अत्र

"वालवासा जटी वापि चरेद् ब्रह्महणो व्रतम् ।
पिण्याकं वा कणान् वापि भक्षयीत समां निशि ॥"

इत्येतत् सुरापव्रतं विज्ञेयम् । ततश्च तद्वदेव मतिपूर्वे स्वल्पसुवर्णहरण एव स्यात् । स्वल्पं चार्वाक् सुवर्णात्, सुवर्णशब्दस्य द्रव्ये तत्परिमाणे चाविशेषात् । न चानेकार्थग्रहणेऽपि दोषः, सुवर्णगत एव परिमाणे दर्शनात् । अतश्च परिमाणवचन एवात्र ग्राह्यः, अर्थतो द्रव्यावगतिः । तथाच व्यासः—

"सुवर्णस्यापहरणे माषकेनापि पातकम् ।
निष्कं पादं तु हरतो न विद्मः किं भविष्यति ॥"

तथा

"सुवर्णमेकं गामेकां भूमेरप्येकमङ्गुलम् ।
अपहृत्य द्विजाग्र्येभ्यो (नास्थिरा? नचिराद्) वध्यते ध्रुवम् ॥"

इति प्राक्सुवर्णादल्पदोषतां दर्शयति । तथा —

"देयस्य परिमाणेन पात्रस्य च यथोत्तरम् ।
दानेऽपहरणे च स्यात् फलं मध्याधमोत्तमम् ॥"

इति । अतोऽपि ह्रियमाणद्रव्यविशेषापेक्षया परिग्रहविशेषापेक्षया च प्रायश्चित्तकल्पना युज्यत एव । ततश्च सुवर्णादूर्ध्वं द्रव्यपरिमाणापेक्षया ब्रह्महत्याप्रायश्चित्तानां विषयकल्पना । सुवर्णशतमपहरतो ब्राह्मणस्य राजान्तिकगमनम् । तत्र च राज्ञा मुसलेन हतः

1. 'नैव शु' ङ. पाठः. 2. 'वा' च. पाठः 3. 'ण' ग. पाठः.

"यदि जीवति स स्तेनस्ततः पापात् प्रमुच्यते"

इति संवर्तवचनाच्छुध्येत् । यदि तु राजान्तिकं न गच्छेत्, तदा आत्मतुल्यम् आत्मना समतुलितं सुवर्णं ब्राह्मणाय दद्यात् । अथवा तावतः सुवर्णस्यान्यत् प्रतिवस्तु ग्रामादिकं विप्रस्य तुष्टिकरं दद्यात् । क्षत्रियादीनां तु सुवर्णशतातिरेकेण हरणे वासिष्ठमेव प्रायश्चित्तद्वयं विकल्पेन स्यात् । आपस्तम्बोक्तमपि —

"स्तेयं कृत्वा सुरां पीत्वा गुरुतल्पं च गत्वा ब्रह्महत्यामकृत्वा ।
चतुर्थकालं मितभोजिनः स्युरपोऽभ्यवेयुः सवनानुकल्पम् ॥
स्थानासनाभ्यां विहरन्त एते त्रिभिर्वर्षैस्तदपहन्ति पापम् ॥"

इति । तत् प्राक्सुवर्णादमतिपूर्वेऽपहरणे गुरुतल्पे चामतिपूर्वे सकृद्गते सुरायाश्चामतिपूर्व एवाभ्यवहारसंयोगमात्रे युगपत् कथञ्चिदभिनिर्वृत्ते इत्येतद् व्याख्यातमेव । आङ्गिरसोक्तमपि ब्रह्महत्याप्रायश्चित्तैः सह विषयव्यवस्थया योज्यं

"महापातकसंयुक्ता वर्षैः शुध्यन्ति ते त्रिभिः ।"

इति । गुणवतस्तु हर्तुः सुवर्णादर्वाङ् मतिपूर्वे सुमन्तुविहितं—"सुवर्णस्तेयी मासं साविञ्याष्टसहस्रमाज्याहुतीनां जुहुयात् । सर्वकृच्छ्रेण च पूतो भवती"ति । एवमन्यदपि । यदि स्तेयप्रायश्चित्तं स्मृत्यन्तरे स्यात्, ततोऽनेनैव मार्गेण योज्यम् । सुवर्णस्तेये च गुणवद्ब्राह्मणसम्बन्धिन्येव महापातकं स्यात् । तस्यैव द्रव्यं प्रत्यनौपचारिकं स्वामित्वम् । इतरस्य तु संव्यवहारमात्रेणौपचारिकं, प्रभुत्वमात्रापेक्षया स्वशब्दो यतः । अथ कस्मान्निर्गुणानामपि स्वत्वं न भवति, शास्त्रगम्यत्वात् स्वत्वसम्बन्धस्य । यदि हि परिग्रहणमात्रेण प्रभुत्वमात्रेण वा स्यात्, ततः सर्वस्य स्यात् । तथाच सति चौर्येणापि तत्संम्भवादपहरणमेव न स्यात् । शास्त्रगम्यत्वे वा निर्गुणस्य किमिति नेष्यते, प्रतिग्रहादीनामेवार्जनोपायत्वेन नियमान्निर्गुणस्य च तदसम्भवात् । यथोक्तं—

"विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः"

इति । एवं याजनाध्यापनयोरपि । यथाह कात्यायनः —

---

१. 'यद्वा ता', २. 'र्षैः पापमपनुदन्तीति' ग. च. पाठः. ३. 'कं प्रभुत्वं, प्रभुत्वमात्रविवक्षया' ङ. पाठः.

"अविद्वान् याजको वा स्यात् प्रवक्ता चानवस्थितः ।
तावुभौ चोरदण्डेन विनीय स्थापयेत् पथि ॥"

इति । एवमन्यान्यप्यनेकशः प्रतिग्रहाद्यनधिकारं प्रतिपादयन्ति । ततश्च तदभावात् स्वत्वाभाव एव । सिलोञ्छादिवृत्तयस्तु याथावराणामेव । कृषिवाणिज्यकुसीदादीनि त्वधिकृतस्यैवार्जितवतः प्रतिग्रहादीनामन्वाचयत्वेनैव व्याख्यातानि । एवं पितृपितामहाद्यार्जितमपि प्राक् समावर्तनात् पित्राद्यभावे राज्ञा पालनीयम् । परतस्तु गुणवतः प्रतिपन्नकर्माधिकारस्यैव तत् तस्य भवति । यस्य त्वन्यः कश्चिद् गुणवान् दायादोऽस्ति तद् गुणवद्ब्राह्मणद्रव्यमेव । अत एव च नारदेनापि त्रैविध्यं धनस्योक्तं —

"शुक्लं च शबलं चैव कृष्णं च त्रिविधं धनम् ।
शुक्लं न्यायार्जितं धर्म्यमितरद् व्यावहारिकम् ॥"

इति । मानवेऽपि —

"धनं यद् यागशीलानां देवस्वं तद् विदुर्बुधाः ।
अयज्वनां तु यद् वित्तमसुरस्वं तदुच्यते ॥"

इति । न तावद् देवानां तत् स्वं, तथा सति याग एव न स्यात् । न हि देवस्वं यजमानः शक्नुयात् त्यक्तुम् । अतो यथाविधं देवानुद्दिश्य त्यज्यते, तथाविधं देवस्वम् । अतो यागशीलानामेव द्रव्ये स्वत्वं मुख्यं, गौणमितरेषामित्येतदेवानेन दर्शितम् । ततश्चायज्वनां यद् वित्तं परिग्रहमात्रेण सांव्यवहारिकं कामभोगमात्रौपयिकं तदसुरस्वं, तत्र तेषां स्वत्वं नास्तीत्यभिप्रायः । तथाच मन्त्रवर्णः "किं ते कृण्वन्ति कीकटेषु गावः" इत्यपरिहरणीयमेवैतदिति ज्ञापयति । अतो निर्गुणब्राह्मणानामौपचारिकित्वात् स्वत्वस्य न तदपहरणे महापातकयोगः । प्रायश्चित्तं तु तत्रापि परिग्रहीतृसंबन्धोपयोगाद्यपेक्षयापहरणप्रयोजनापेक्षयापहर्तृगुणापेक्षया च कल्पनीयम् । तत्र भूयसोऽपहरणे द्यूतादिप्रयोजने च शङ्खोक्तं "हिरण्यस्तेनः पतितसंव्यवहारी मित्रध्रुक् शरणागतघाती प्रतिरूपकवृत्तिरित्येते जलशयनं पञ्चतापमभ्रावकाशं चानुतिष्ठेयुर्ग्रीष्मवर्षाहेमन्तेष्वि"त्येतदेव । तान्यनियतकालत्वात् संवत्सरं द्वौ त्रीन् वा यथार्हं कल्पनीयम् । यदि

१. 'पिता' ङ. च. पाठ.. २. 'ह्यं, गौणमन्येषामि' च., 'ह्यम्, अन्येषा गौणमि' ङ पाठः.

तु गुणवानपहर्ता अल्पं चापहृतं प्रमादात्तु गुणवतोऽप्यसदुपयोग', ततः शङ्खोक्तमेव । पूर्वस्यैवानन्तरोपदिष्टं "मासं वा गोमूत्रयावकं पिबेयुरेवं शुध्येयुरि"ति । एवंविधान्यन्यान्यपि निर्गुणब्राह्मणसुवर्णविषयतया यथार्हं योज्यानि । दण्डस्तु यो राजपुरुषैर्बलादानीयते । यथोक्तं दण्डप्रकरणे—

"राजा स्तेनेन गन्तव्यो मुक्तकेशेन धीमता* ।
आचक्षाणेन तत् पापमेवंकर्मास्मि शास्तु माम् ॥
स्कन्धेनादाय मुसलं लगुडं† वापि खादिरम् ।
शक्तिं वोभयतस्तीक्ष्णामायसं दण्डमेव वा ॥
शासनाद् वा विमोक्षाद् वा स्तेनः स्तेयाद् विमुच्यते ।
अशासित्वा तु तं राजा स्तेनस्याप्नोति किल्बिषम् ॥"

इति । एतच्च राजपुरुषैरेव नीयमानस्य द्रष्टव्यं न तु स्वयं प्रायश्चित्तार्थमागतस्य, तत्र हि ततो मुसलमादायेति वधस्यैव नियतत्वात् । इह त्वपराधापेक्षया शासनं वा विविधैर्वाग्दण्डादिभिर्वधपर्यन्तैर्मोचनं वा कथञ्चिन्निरपराधस्यैवाविमृश्यानीतस्य । अत एव "शासनाद् वा विमोक्षाद्वे"त्युक्तम् । प्रायश्चित्तार्थं तु परिषदा विमृश्यानुमतस्य कुतो विमोचनाशङ्का । अतश्च याज्ञवल्क्येऽपि "हतो मुक्तोऽपि वा शुचिः" इत्येतत्संवर्तैकवाक्यतया राज्ञा हतो यदि जीवति, ततो दण्डमगृहीत्वैव राज्ञा मुक्तो विशुध्यतीत्येवं व्याख्येयम् । तथाच मानवे राज्ञो दण्डप्रकरणेऽपि दोष उक्तः— "शासनाद् वा विमोक्षाद् वा" इति । एतदुक्तं भवति—विमोक्षादपि स्तेनो दोषान्मुच्यते । किन्त्वशासित्वा यदि राजोत्सृजेत्, ततस्तस्य यत् किल्बिषं, तदाप्नोतीत्यर्थः । केन । शासनार्हः शास्यः । तत्र च ब्राह्मणस्य न शरीरदण्डः । किन्तु प्रायश्चित्तार्थं चैतदेव । नात्र वधदण्डोऽपि

"न जातु ब्राह्मणं हन्यात् सर्वपापेष्ववस्थितम्"

इति प्रतिषेधात् । पाप एव योऽवस्थितः प्रायश्चित्तार्थं राजाभिगमनं नेच्छति, न बलादानीय तं हन्यादित्यर्थः । न शारीरो ब्राह्मणदण्ड इति दण्डस्यैव प्रतिषेधो न तु प्रायश्चित्तार्थतयागतस्येत्येषा दिक् ॥ २५२ ॥

१. 'नीत' ग. च. पाठः,

* धावता इति तु युक्तः पाठः. † 'लकुटं' इत्येव मूलकोशपाठः.

इदानीं गुरुतल्पप्रायश्चित्तान्याह —

**तप्तेऽयःशयने सार्धमायस्या योषिता स्वपेत् ।**
**गृहीत्वोत्कृत्य वृषणौ नैर्ऋत्यां चोत्सृजेत् तनुम् ॥ २५३ ॥**
**प्राजापत्यं चरेत्कृच्छ्रं समां वा गुरुतल्पगः ।**
**चान्द्रायणं वा त्रीन् मासानभ्यसन् वेदसंहिताम् ॥२५४॥**

अत्र पूर्वश्लोके गुरुतल्पग्रहणं न कृतं, महापातकोद्देशाधिकार एवोक्तत्वात्, "पितृष्वसां मातुलानी"मित्युपक्रम्य

"छित्त्वा लिङ्गं वधस्तस्य सकामायाश्च योषितः"

इति । न च राज्ञस्तदुपदिश्यते, प्रकरणविरोधात् । अतः छित्त्वा लिङ्गं सवृषणं वध एवात्मनस्तस्य प्रायश्चित्तं नान्यदिति तस्यार्थः । अतश्च यदि सकाम एताः स्त्रियोऽभ्यासेन वा गच्छेत्, तत एतत् प्रायश्चित्तं, सकामायाश्च योषितोऽप्यनिच्छन्तमेवंविधं गच्छन्त्या अभ्यासेन वा निष्कामाया अपि । चशब्दसामर्थ्यादेतदेव प्रायश्चित्तम् । तेनात्र प्रायश्चित्तान्तरोपदेशार्थमुत्तरश्लोक एव गुरुतल्पग्रहणं कृतम् । पूर्वश्लोके पूर्वोक्तलिङ्गच्छेदनसंबन्धादेव ज्ञायत एवेति पुनर्नोक्तम् । अतश्च पूर्वोपदिष्टस्यैव लिङ्गोत्कर्तनस्य वधस्य च प्रकारनिर्देश इह कृतः । एवञ्च सति यद्यकामां पितृष्वस्रादीनां कांचिद् बलात् प्रमथ्य प्रतारयित्वा वाभ्यासेन गच्छेत्, ततः पूर्वं तप्तेऽयःशयने सार्धमायस्या योषिता स्वपेद् इत्येतद् द्रष्टव्यम् । द्वयोस्तुल्यायां प्रवृत्तावुत्तरं सकामायाश्च योषित इति स्मरणात् । अविशेषेण वोभयमस्तु । सर्वथा कामकृतेऽभ्यासे चैतत् प्रायश्चित्तद्वयं वेदितव्यम् । तप्तेऽग्निवर्णे लोहफलके तन्मध्ये वा अग्निवर्णयाभिगम्यमानया योषित्प्रतिरूपया सैवेयमिति स्नेहेनानुरक्त इवालिङ्ग्य स्वपेदित्यर्थः । योषिद्ग्रहणं च प्रदर्शनार्थम् । अतश्च योषितापि पुमानेवंविध एवालिङ्गनीयः । यद्वा गृहीतोत्कृत्तवृषणः सन् नैर्ऋत्यां दिशि तनुं शरीरमुत्सृजेद्, मरणाच्छुध्यतीत्यर्थः । स्वयमुत्कृत्य क्षुरादिना शस्त्रेण हस्ताभ्यां वृषणौ गृहीत्वा प्रत्यग्दक्षिणां दिशं गच्छेद् अकुटिलेन च मार्गेण । यद्यन्तरे कूपादि भवति ततो

१ 'णम् उत्कृत्य व' ग पाठः. २. 'व प्रा' ख. पाठः

न परिहृत्य गन्तव्यम् । यदि तु केनचिद् वृक्षादिनान्तरे प्रतिहन्येत, ततस्तत्रैवा मरणादासीत । वृषणग्रहणं चोपलक्षणमत्र । अतश्च सवृषणस्यैव लिङ्गस्योद्धारः । तथाच वसिष्ठः—"गुरुतल्पगः सवृषणं शिश्नमुत्कृत्या-ञ्जलावाधाय दक्षिणामुखो गच्छेत् । यत्रैव प्रतिहन्यात् तत्रैव तिष्ठेदा प्रल-यादि"ति । तथा "निष्कालको वा घृताक्तस्तप्तां सूर्मिं परिष्वजेद् मरणात् पूतो भवतीति विज्ञायत" इति । निष्कालकः कालानपेक्षः, सद्यो मरण-मिच्छन्निति यावत् । शरीरगतं वा कालं केशलोमाद्यपनीतं यस्मात् स निष्कालकः, कालशब्दस्य कृष्णपर्यायत्वात् । पूर्वं तु युक्ततरम् । सूर्मी चात्र प्रतिकृतिरायसी, परिष्वजेदिति लिङ्गात् । ऋज्वन्यत् । दक्षिणादि-ग्वचनं चोपलक्षणार्थं विकल्पार्थं वा । स्पष्टमन्यत् । शाङ्खेऽप्येवमेव । क्षुरेण तु शिश्नोत्कर्तनमिति विशेषः । यथाह—"गुरुतल्पगस्तप्तमायसं शयनमुपसंविशेत्, क्षुरेण वा शिश्नं सवृषणमुत्कृत्याञ्जलावाधाय नैर्ऋतीं दिशमनवेक्षमाणो व्रजेदा शरीरपातात् पूतो भवती"ति । एवं "मातुलानी-पितृष्वसास्नुषाभगिनीदुहितृगमनेष्वाचार्यदुहितरि च[1]"ति । अत्र चशब्दा-दाचार्यभार्यायां चेति गम्यते । गमनेष्विति बहुवचनादभ्यासे कामत-श्चेत्येतल्लभ्यते । भेदेन च मातुलानीदुहित्राद्यभिधानाद् मुख्यगुरुतल्पतोऽन्यत्र जनन्याः कामकृते सकृद्गमने जनन्यां त्वकामत एवैतदिति ज्ञायते । मु-ख्यत्वं च पितृसवर्णास्वेव पितृभार्यासु, पितुरेवानौपचारिकं गुरुत्वं यतः । तथाचाचार्यभार्यायामातिदेशिकं दर्शितम् । वासिष्ठे च "आचार्यपुत्रशिष्य-भार्यासु चैवमि"ति स्पष्ट एवातिदेशः । अतश्च सूक्ता विषयकल्पना । जनन्यां पुनरज्ञानादपि सकृद्गमन एवैतत् स्यात् । यथाह संवर्तः—

"मातरं योऽभिगच्छेत् तु सुतां वा पुरुषाधमः ।
भगिनीं वा निजां मूढो निष्कृतिर्नास्य विद्यते ॥"

इति । जीवप्रायश्चित्ताभिप्रायेण चोक्तं, गुरुतल्पप्रायश्चित्तस्यान्यथा निर्वि-षयत्वप्रसङ्गात् । यथा तेनैवोक्तं—

"गुरुतल्पगस्तु शयने तप्ते स्वप्यादयोमये ।
अन्वगूहेत वा दीप्तां स्त्रियं कृष्णायसीकृताम् ॥"

---

1 'चैवमिति' ङ पाठः.

इति । तथाच हारीतः—

"पितृभार्यां तु विज्ञाय योऽभि[1]गच्छति मानवः ।
जननीं वाप्यभि[2]ज्ञाय नामृतः शुद्धि[3]माप्नुयात् ॥"

इति । एवं स्मृत्यन्तराण्यपि व्याख्येयानि । समानार्थत्वात् तु नोदाह्रियन्ते । यदि त्वज्ञानतो जननीव्यतिरेकेण सवर्णासु पितृभार्यासु सकृद् गमनं स्यात्, तदा

"प्राजापत्यं चरेत् कृच्छ्रं समां वा गुरुतल्पगः"

इत्येतत् । समां संवत्सरमित्यर्थः । चरेदि[4]ति खट्वाङ्गादिप्राप्त्यर्थम् । यथाह मनुः—

"खट्वाङ्गी चीरवासा वा श्मश्रुलो निर्जने वने ।
प्राजापत्यं चरेत् कृच्छ्रमब्दमेकं समाहितः ॥"

इति । असवर्णासु तु सकृद[5]विज्ञातगमने

"चान्द्रायणं वा त्रीन् मासानभ्यसे[6]द् वेदसंहिताम् ।"

इति । एतच्च वेदाध्ययन एव स्यात्, सामर्थ्यात् । यस्तु वेदाभ्यासासमर्थः, स[7] चत्वारि चान्द्रायणानि कुर्यात् "त्रीणि चत्वारि वा पुनरि"ति । पुनःशब्दाच्चामतिपूर्वे पुनर्गमने सत्येतदेव पुन[8]: पुनः कुर्यादित्यभिप्रायः । त[9]तश्चाकाम[10]तं उपगमनसंख्ययास्यैव व्रतस्याभ्यासः । कामतश्च[11] सकृद्गमने सांवत्सरिकम् । अभ्यासे च मरणान्तिकमेव ।

"यथाकथञ्चित् पिण्डानां चत्वारिंशच्छतद्वयम्"

इत्येतच्चान्द्रायणं, न यवमध्यादि, मासानिति मासग्रहणसामर्थ्याद्[12] वाशब्दद्वयाच्च । स्मृत्यन्तरोपसंहारादियं विषयकल्पना । यावच्च गुरोः परिग्रहार्हाः, तावत् गुरुतल्पप्रायश्चित्तानामवसरः । यदा तु व्यभिचारिण्यः, तदा पारदार्यप्रायश्चित्तमेव स्यात् । तच्च चान्द्रायणं गोघ्नप्रायश्चित्तं वेत्युत्तरत्र वक्ष्यत्येव । व्यभिचारित्वेऽपि यदि गुरुणा न परित्यक्ता, तथा[13]प्यस्त्येव गुरुतल्[14]पेतेति केचि[15]त् । तत्पुनर्यदि गुरुणा वा व्यभिचारित्वं न

१. 'धि', २. 'वि', ३. 'स विशुध्यति ॥' ग. च. पाठ. ४. 'ति च ख', ५. 'दज्ञा' च. पाठः. ६. 'स तु च' ग. च. पाठः ७. 'नः कु', ८. 'अ' ग. पाठः. ९. 'श्चायं का' ङ. पाठः. १०. 'मकृत' ग. ङ. पाठः. ११. 'स्तु' ग च. पाठः. १२. 'प्रतिग्र' ङ. पाठः. १३. 'थास्त्ये', १४. 'ल्पप्रायश्चित्तमिति', १५. 'तु पुन' ग. पाठः.

ज्ञातं, तन्निमित्तं वा प्रायश्चित्तं कारयितुमारब्धं, तदैतदेवं स्यात्। यदा तु गुरुरप्यनर्हामेवाङ्गीकुर्यात्, तदान्यदेव सामान्यविहितं गुरोरपरित्यागकारणानुरूप्येण कल्प्यम्। केचित्तु परित्यक्तासु पारदार्यप्रायश्चित्तं नैवेच्छन्ति, संबन्धिनिमित्तत्वाद् दारशब्दस्य। तथाच सति विधवास्वपि पारदार्यं न स्यात्। न च व्यभिचारादिभिस्तस्यापगमो युक्तः, संस्कारनिमित्तत्वाद् दारशब्दस्य, तस्य च पतनेऽप्यनपगमात्। अत एव पतिता योषितः कृतप्रायश्चित्ताः पुनर्न संस्क्रियन्ते। अन्यथा तु पतनेन संस्कारस्यापगमात् कृतप्रायश्चित्ता अप्यदाराः स्युः। अतो व्यभिचारिणीष्वप्यस्त्येव पारदार्यम्। प्रायश्चित्तान्तरं तु स्वैरिणीत्वनिमित्तं विशेषविहितत्वात् तासु भवत्येव। यथाह शङ्खः—"स्वैरिण्यां वृषल्यामवकीर्णः सचेलः स्नात्वोदकुम्भं दद्याद् ब्राह्मणाय। वैश्यायां चतुर्थकालाहारो ब्राह्मणान् भोजयेत्। क्षत्रियायां त्रिरात्रोपोषितो यवाढकं दद्यात्। ब्राह्मण्यां षडहमुपोष्य घृतपात्रं दद्यात्। प्रकीर्णास्वेवम्। अस्वतन्त्रास्वन्यथे"ति। एतच्चायोनिसंबन्धाचार्यादिसमस्तगुर्वसंबन्धासु गुर्वीसख्यादिव्यतिरिक्तास्ववर्णोत्तमासु चाकामतो गमने वेदितव्यम्। कामतस्तूपपातकप्रायश्चित्तमेव। तच्च गौतमीयं "द्वे परदारे त्रीणि श्रोत्रियस्ये"त्येतत् प्रत्येतव्यम्। अपरित्यक्तासु तु व्यभिचारिणीष्वकामतो वासिष्ठं "ब्राह्मणश्चेदप्रेक्षापूर्वकं ब्राह्मणदारानभिगच्छेद्, निवृत्तधर्मकर्मणः कृच्छ्रोऽनिवृत्तधर्मकर्मणोऽतिकृच्छ्रः" इत्येतत् स्यात्। कामतस्तु चान्द्रायणं गोघ्नप्रायश्चित्तं वा। तत्र यदि व्यभिचारित्वमपरिज्ञायापरित्यागः, तदा चान्द्रायणम्। यदि तु प्रायश्चित्तं कारयितुमारब्धा तदा गोघ्नप्रायश्चित्तं, "एनसि गुरुणि गुरूणि लघुनि लघूनी"ति वचनात्। अव्यभिचारिणीषु त्वकामतोऽतिशयेन गुणवतां ब्राह्मणादीनां सवर्णासु गुणवतीषु च गमने शङ्खोक्तम् "अप्रकीर्णासु त्वन्यथावैश्यायामवकीर्णः संवत्सरं त्रिषवणमनुतिष्ठेत्। क्षत्रियायां द्वे ब्राह्मण्यां त्रीणि त्रीणि वैश्यावच्च शूद्रायामि"ति। शूद्रायां च ब्राह्मणजातायाम् उत्कृष्टभार्यायां चैतत् स्यात्। कामतस्त्वभ्यासेन च गमने गुरुतल्पप्रायश्चित्तम्।

---

१. 'न्ध' च. पाठः. २. 'दं', ३. 'मकृत' ङ. पाठः. ४. 'सु च गु', ५. 'नेन गु' ग. पाठः.

यथा नारदेन दण्डप्रकरणेऽभिहितं—

"माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा।
पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा॥
दुहिताचार्यभार्या च सगोत्रा शरणागता।
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या।
आसामन्यतमां गत्वा गुरुतल्पग उच्यते॥"

इति। तेन साध्व्यां गुरुतल्पगवचनात् तदीयप्रायश्चित्तप्रसङ्गः। मातृपितृसंबन्धायां यथासंनिकर्षं प्रायश्चित्तगुरुत्वम्। तच्च पितृसंबन्धि गुरुत्वमष्टमात् पुरुषादारभ्य मातृसंबन्धि च षष्ठाद् विवाहव्यावर्तकल्पवच्च विवेक्तव्यम्। तथा तत्सखीष्वपि सन्निकृष्टविप्रकृष्टत्वेन प्रायश्चित्तविशेषकल्पना। जननीव्यतिरिक्तपितृभार्याणां तु भ्रातरो मातुलाः तद्भगिन्यश्च मातृष्वसारः। तथा भगिनीसपत्न्यश्च भगिन्यः, तदपत्यं च भागिनेयः। अतश्च तत्रापि निजमातुलान्याद्यपेक्षया किञ्चिन्न्यूनं प्रायश्चित्तं स्यात्। तथाच सुमन्तुः "पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तद्भगिन्यश्च मातृष्वसारः, तथा भगिनीसपत्न्यश्च भगिन्यस्तदपत्यं च भागिनेयः। अतोऽन्यथा संकरकारकाणि कृत्वा याप्याः पतिताश्च भवन्ती"त्यातिदेशिकमेव व्यपदेशं दर्शयति। अतश्च प्रायश्चित्ताल्पत्वसिद्धिः। एवमन्येषामप्येतद्विषयाणां प्रायश्चित्तानां विवेकः कार्यः। विशेषविहितानां तु कामकारादिव्यवस्थयैव विषयकल्पना। यथा तावन्मानवे—

"पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च।
मातुश्च भ्रातुरात्तस्य गत्वा चान्द्रायणं चरेत्॥"

इति। तथा संवर्ते—

"गुरोर्दुहितरं गत्वा स्वसारं मातुरेव च।
तस्या दुहितरं चैव चरेच्चान्द्रायणं व्रतम्॥
मातुलानीं तथा श्वश्रूं सुतां वै मातुलस्य च।

१. 'न्धित्वं च' ग. पाठः. २. 'लाः, भगि', ३. 'न्यो भ' च. पाठः. ४. 'सं भा' ग. च. पाठः. ५. 'थाच सं' ङ. पाठः.

एता गत्वा स्त्रियो मोहात् पराकेण विशुध्यति ॥
पितृव्यदारगमने भ्रातृभार्यागमे तथा ।
गुरुतल्पव्रतं कुर्यान्निष्कृतिर्नान्यथा भवेत् ॥
कुमारीगमने चैव व्रतमेतद् विनिर्दिशेत् ।
सखिभार्यां समारुह्य स्नुषां मातृष्वसुः सुताम् ॥
अहोरात्रोषितो भूत्वा तप्तकृच्छ्रद्वयं चरेत् ॥"

इति । तथा सुमन्तुना सामान्येनैवोक्तं — "अगम्यागमनस्त्रीवधचण्डालसंपर्केषु कृच्छ्रत्रयं चरेद्" इति । विशेषेण चोक्तं — "मातृपितृष्वसृस्नुषाभगिनीभागिनेयीगोचण्डालीगमनेषु तप्तकृच्छ्रत्रयं सान्तपनं च तिर्यग्योनिगमने प्राणायामः" इति । तथा गौतमे "सखिसयोनिसगोत्राशिष्यभार्यासु स्नुषायां गवि च तल्पसमोऽवकर इत्येक" इत्युक्तम् । अवकरोऽवकीर्णिप्रायश्चित्तम् । एवं स्मृत्यन्तरेष्वपि प्रायश्चित्तानि विशेषतः सामान्यतश्चैवंप्रकाराण्येव पठ्यन्ते, समानार्थत्वात् तु न लिख्यन्ते । तदेतत् सर्वं कामकृतादिव्यवस्थायां यथायथं योज्यम् । सर्वत्र चानाम्नातप्रायश्चित्ते गौतमीयं "कृच्छ्रातिकृच्छ्रौ चान्द्रायणमिति सर्वप्रायश्चित्तमि"त्येतद् व्यस्तसमस्ततया योज्यं, सर्वप्रायश्चित्तवचनात् । इतिशब्दस्य च प्रकारार्थत्वात् पापविशेषापेक्षया तस्यैवावृत्तिः कल्पनीया इत्येषा दिक् । स्त्रीणामप्येवमेव प्रायश्चित्तकल्पना । यच्छूद्रस्य ब्राह्मणीनां गमने, तदेव ब्राह्मण्याः शूद्रगमने स्यात् । एवं क्षत्रियादिष्वपि । योनिसंबन्धगमनेऽप्येवमेव । तथाचाह मनुः —

"विप्रदुष्टां स्त्रियं भर्ता निरुन्ध्यादेकवेश्मनि ।
यत् पुंसः परदारेषु तच्चैनां चारयेद् व्रतम् ॥"

इति । कृतप्रायश्चित्ता यदि भूयः प्रवर्तेत, ततो यत् पुरुषस्य पारदार्यप्रायश्चित्तं, तत् कारयित्वा पुनरनुबन्धाद्यपेक्षया कृच्छ्रं, तच्च केवलं चान्द्रायणोत्तरं वा । यथाह मनुः—

"सा चेत् पुनः प्रदुष्येत सदृशेनोपमन्त्रिता ।
कृच्छ्रं चान्द्रायणं चैव तदस्याः पावनं स्मृतम् ॥"

---

१. 'र्णि' च. पाठः. २. 'च म' ङ. पाठः. ३. 'ध्या' ग. च. पाठः. ४. 'का', ५. 'न्या' ग. पाठः.

इति । एतच्च यस्यासौ रक्षणीया स यदि सङ्ग्रहीतुमिच्छति ततः प्रायश्चित्तमेकगृह एव निरुद्धां कारयेत्, यदि तु न सगृह्णीयात् ततो विप्रदुष्टां परित्यजतो न दोषः इत्येतद् भर्तृग्रहणाल्लभ्यते । अन्यथा तु "निरुन्ध्यादेकवेश्मनि" इत्येतावतैव सिद्धत्वाद् भर्तृग्रहणमनर्थकमेव स्याद्, अन्यस्यैवंविधप्रयत्नासंभवात् । न चायं राज्ञ उपदेशः, अन्यत्र दण्डप्रकरणेऽभिहितत्वात् । ततो भर्तृग्रहणाद् यदि भर्तुमिच्छति, तत एतत् कारयेदिति गम्यते । वासिष्ठानि तु प्रायश्चित्ताधिकारोक्तान्यपि सामर्थ्याद् राज्ञ एवोपदिश्यन्ते —"शूद्रश्चेद् ब्राह्मणीमभिगच्छेद्, वीरणैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येद्, ब्राह्मण्याः शिरसि वपनं कारयित्वा" इत्यादीनि । यदि तु स्वयमेव स्त्रियः प्रायश्चित्तं कुर्युः, ततो मनसा भर्तुरतिचारे त्रिरात्रं यावकं क्षीरौदनं वा भुञ्जानाधः शयीत । "ऊर्ध्वं त्रिरात्रादप्सु निमग्नायाः सावित्र्याष्टशतेन शिरोभिर्जुहुयात् पूता भवतीति विज्ञायते । वाक्संबन्ध एतदेव मासं चरित्वोर्ध्वं मासादप्सु निमग्नायाश्चतुर्भिः सावित्र्याष्टशतैः शिरोभिर्जुहुयात् पूता भवतीति विज्ञायते । व्यवाये तु संवत्सरं घृतपटं धारयेत् गोमयगर्ते कुशप्रस्तरे वा भुञ्जानाधः शयीत । ऊर्ध्वं संवत्सरादप्सु निमग्नायाः सावित्र्याष्टसहस्रेण शिरोभिर्जुहुयात् पूता भवतीति विज्ञायत" इति । एतच्च त्रैवर्णिकयोषितां त्रैवर्णिकविषयं सर्वत्राविशेषेणैव स्याद्, विशेषानुपदेशादेव, शूद्रगमने चोत्तरत्र प्रायश्चित्तवचनात् ।

"ब्राह्मणक्षत्रियविशां स्त्रियः शूद्रेण सङ्गताः ।
अप्रजाता विशुध्यन्ति प्रायश्चित्तेन नेतराः ॥"

इत्युक्त्वा प्रायश्चित्तं यदप्रजातानां शूद्रगमने, तद् दर्शितं —

"प्रतिलोमं चरेयुस्ताः कृच्छ्रं चान्द्रायणोत्तरम्"

इति । अत्र च त्रैवर्णिकस्त्रीणामविशेषोपदेशात् पूर्वत्राप्यविशेष एवेति ज्ञायते । कर्तव्यतानिश्चये चान्येनाप्रतारितायाः स्वयमेव दृढे मनस्यवस्थिते

---

१. 'ष्टा स्त्रियं प', २ 'प्रायश्चित्तासं' ग. पाठः. ३. 'त्येवमादी' च पाठः. ४. 'नि स्व', ५. 'स्ति', ६. 'भि', ७. 'रोदकं वा', ८ 'याः सावित्र्याश्चतुर्भिः शि' ग. पाठः. ९. 'रात् सा' ग. च. पाठः. १०. 'ना त' ग. पाठः. ११. 'एतच्च त्रै' ग. च. पाठः.

मानसं, वाचिकमप्येवमेव, व्यवाये चैवंविध एवैतत् स्यात् । शूद्रप्रसङ्गे च "एतत् कृत्वा प्रतिलोमं चरेत्सुरि"त्येतत् स्यात्, अभिगमनसंख्यया च प्राग् गर्भोत्पत्तेः । गर्भे तु गुरुतल्पप्रायश्चित्तमेवेत्येषा दिक् । अकामतस्तु प्रतारिताया हृदयेन व्यलीकेन यदि कथञ्चिद् व्यभिचारः स्यात्, ततः संवर्तोक्तानि प्रायश्चित्तानि प्रत्येतव्यानि । यथाह—

"ब्राह्मणी ब्राह्मणं गत्वा कृच्छ्रमेव समाचरेत् ।
एव शुद्धिः समाख्याता संवर्तवचनं यथा ॥
यदि तु ब्राह्मणी गच्छेत् क्षत्रियं वैश्यमेव वा ।
गोमूत्रयावकाहारा दशरात्रेण शुध्यति ॥
ब्राह्मण्याः शूद्रसंपर्के कथञ्चित् समुपागते ।
चान्द्रायणेन शुद्धिः स्यात् तदस्याः पावनं परम् ॥"

इति । अत्र परं कृच्छ्रात् चान्द्रायणं पावनमित्येवं व्याख्येयम् । स्पष्टमन्यत् ॥ २५४ ॥

**रजकव्याधशैलूषवेणुचर्मोपजीविनः ।**
**ब्राह्मण्येतान् यदा गच्छेत् कृच्छ्रं चान्द्रायणं चरेत् ॥**

व्याधो लुब्धकः । शैलूषो नटः । अत्रापि कृच्छ्रं चान्द्रायणं, कृच्छ्रं चान्द्रायणे, कृच्छ्रं चान्द्रायणानि । स्पष्टमन्यत् ॥ २५५ ॥

**श्वपाकं पुल्कसं म्लेच्छं चण्डालं पतितं तथा ।**
**एतांस्तु ब्राह्मणी गत्वा चरेच्चान्द्रायणत्रयम् ॥ २५६ ॥**

श्वपाको मरुकुन्तिकः । पुल्कसो मेयः । म्लेच्छाः पुलिन्दाः तार्जिकादयः । अत्रापि तथाशब्दः पूर्वश्लोकोक्तप्रकारप्राप्त्यर्थः । ततश्च कृच्छ्रपूर्वाण्येतानि प्रत्येतव्यानि, एकैकगमने च सर्वत्र बहुवचनस्याविवक्षितत्वात् । यदि तु कथञ्चिद् बलात् प्रमथ्यातिशयदुःखार्ता भुज्यते, ततो हारीतोक्तं द्रष्टव्यं—

"बलात् प्रमथ्य भुक्ता या गृह्यमाणेन चेतसा ।
प्राजापत्येन शुध्येत चण्डालपतितेष्वपि ॥"

१. 'वे', २ 'जभि', ३. 'नि, ए', ४. 'ने च. संवर्तव' ग. पाठः.

यदि तु भर्तायं मदीय एवेत्येवं मन्यमाना सकामैवोपभुक्ता स्यात्, ततो यदा विज्ञानं, तदा —

"स्त्रियः पवित्रमतुलं नैना दुष्यन्ति कर्हिचित्।
मासि मासि रजो ह्यासां दुष्कृतान्यपकर्षति ॥"

इत्येवमादीनामर्थवत्ता। यदि तु पश्चात् कथञ्चित् सामान्यतः परपुरुषेणाहं भुक्तेत्येतावदेवावगच्छेत्, ततो वासिष्ठं —

"बलात्कारोपभुक्ता वा चोरहस्तगतापि वा।
स्वयं विप्रतिपन्ना वा यदि वा विप्रवादिता ॥
न त्याज्यादूषितानारी नास्यास्त्यागो विधीयते ॥"

इत्युक्त्वोक्तं —

"पुष्पकालमुपासीत ऋतुकालेन शुध्यति"

इति। अयमस्यार्थः—यदि तु स्वयमेव नायं मम भर्ता भ्रान्त्यैवायं मया तद्बुध्या गृहीत इत्येवं पूर्वस्मात् तथात्वावगमाद् विप्रतिपन्ना, अथवान्येन केनचिन्नायं त्वदीयो भर्तेत्येवं तद्बुद्धेर्विप्रवादिता, बलात्कारेण वा केनचित् सवर्णेनोपभुक्ता, परराष्ट्रोपप्लवादौ वा कथञ्चिच्चोरहस्तगता हीनवर्णोपभुक्ताप्यत्याज्या स्यात्। कस्माद्, यतस्तेन प्रकारेण सादूषितैव। नारीत्वं हि या प्रतिपद्यते, सा दूष्यते। या त्वनारीत्वेन तिर्यग्विधिना भुज्यते, न तस्यास्त्यागोऽभ्यासेन वाप्युपभुक्तायाः विधीयते, संग्राह्यैवासावित्यभिप्रायः। विधीयत इति वचनादर्थलक्षणस्त्यागो भर्तुरिच्छया न प्रतिषिध्यते, स्वेच्छया परिग्रहोऽप्यदुष्टः इत्यभिप्रायः। इदं तु तस्याः प्रायश्चित्तं—"पुष्पकालमुपासीत" इत्यादि। पुष्पशब्देन ऋतुकाल उच्यते। पूर्वोक्तेन यावकक्षीरौदनादि गोमयगर्ते भुञ्जाना अधःशायिनी घृतपटं धारयन्त्यासीत यावत् पुष्पकालम्। ततस्तदुक्तयैव व्रतचर्यया त्रिरात्रान्ते स्नाताप्यासीत यावत् षोडश रात्रयः। एवमृतुकालेन शुध्यतीति। एतदेव च पुरस्तात् प्रदर्शितम्। "तस्या उक्तं प्रायश्चित्तं रहस्येऽपि"ति हारीतोक्तेन कृच्छ्रेण सहास्य विकल्पः। प्रतिलोमव्यभिचारेऽप्येवंविधस्यैवा-

---

१. 'तिपादितम' ग. पाठः. २. 'रे त्वेवं' ग. च. पाठः.

भ्यासकल्पना इत्यलं प्रसङ्गेन । पुरुषस्यापि स्वभार्याबुद्ध्यैवाभिगमने एषैव प्रक्रिया योज्या । अत एवं च गौतमेनोक्तं -- "न स्त्रीष्वगुरुतल्पं पततीत्येके" इति । गुरुतल्पे तु स्वभार्याबुद्ध्यापि पतनमेवेत्यभिप्रायः । यच्च मनुनोक्तं —

"यत् पुंसः परदारेषु तच्चैनां चारयेद् व्रतम्"

इति, तत्र चशब्दाद् यच्च स्त्रीणां परपुरुषेऽभिहितं तत्पुंस इत्येवं व्याख्येयम् । ततश्च हारीतोक्तं कृच्छ्रं तेनैव प्रकारेण पुंसोऽपि भवत्येवेत्येषा दिक् ॥ २५६ ॥

एवं तावच्चतुर्णां गुरुतल्पपर्यन्तानां महापातकानां प्रायश्चित्तान्यभिधायेदानीं तत्संसर्गिणः प्रायश्चित्तावसरेऽर्थान्तरोपदेशद्वारेण प्रायश्चित्तमाह—

**एभिस्तु संपिबेद् यो वै वत्सरात् सोऽपि तत्समः ।**
**कन्यां समुद्वहेदेषां सोपवासामकिंचनाम् ॥ २५७ ॥**

महापातकोद्देशे "यश्चैतैः संपिबेत् समामि"ति महापातकित्वमुक्तम् । इदं तु प्रायश्चित्तार्थं तत्समत्ववचनम् । य एते ब्रह्महप्रभृतय उक्ताः पातकिनः एभिर्यः संवत्सरं संपिबेत् सहभोजनाद्यं कुर्यात्, सोऽपि संवत्सरात् तत्समः, तदविशिष्टप्रायश्चित्तार्ह इत्यभिप्रायः । समशब्दश्चात्र तदेवास्य प्रायश्चित्तं सममन्यूनानतिरिक्तं पूर्वोक्तयैव विषयव्यवस्थया यथा स्यादित्येवमर्थः । अतश्च समशब्दादीषन्न्यूनत्वं नाशङ्कनीयम् । तथाच मानवे —

"यो येन पतितेनैषां संसर्गं याति मानवः ।
स तस्यैव व्रतं कुर्यात् तत्संसर्गविशुद्धये ॥"

इति प्रायश्चित्तसाम्यमेवोक्तम् । वत्सरादिति पञ्चम्यन्तं परत इत्यध्याहृत्य योज्यं, संवत्सरात् परतस्तदीयप्रायश्चित्तार्ह इत्यर्थः । प्राक् त्वन्यदेव प्रायश्चित्तं दर्शयिष्यामः । अस्यापवादः— "कन्यामक्षतयोनिकां सम्यङ् निर्विचिकित्समुद्वहेत्" । अयं तु विशेषः — "सोपवासामकिञ्चनाम्" । उपवासशब्दोऽत्र प्रायश्चित्तोपलक्षणार्थ इति केचित् । उपवासमात्रमेव

---

१. 'त्येषा दिक् । पु' ग. पाठः. २. 'द्धयाभि', ३. 'व गौ' ग. च. पाठः. ४. 'सार्थमुक्तं व', ५. 'त्समत्र ना' च. पाठः.

प्रायश्चित्तमिति युक्ततरम्, उपलक्षणत्वे हेत्वभावात् । अकिञ्चनत्वं च पुष्पमालामात्रमपि तदीयं न ग्राह्यमित्यभिप्रायम् । तथाच हारीतः— "पतितस्य तु कुमारीं विवस्त्रामाछाद्याहोरात्रोपोषितां प्रातः शुक्लेनाहतेन वाससाच्छाद्य 'नाहमेतेषां न ममैत' इति त्रिरुच्चैरभिधाय तीर्थे स्वगृहे वोद्वहेद्" इति । यत्तु मनुनोक्तं—

"संवत्सरेण पतति पतितेन समाचरन् ।
याजनाध्यापनाद् यौनान्नतु यानाशनासनात् ॥"

इति । याजनाध्यापनादिना निमित्तेन यानि यानाशनासनादीनि, न तैः संवत्सरेण पतति । किन्तर्हि, अर्वागेव संवत्सरात् । यानि तु लोकसंव्यवहारेण यानादीनि, तैः संवत्सरेणेत्यभिप्रायः । याजनाध्यापनयोश्चैकवद्भावो यौनापेक्षया न्यूनत्वार्थः । याजनाध्यापनाद्यौनात् पतितेन समाचरन्नित्येवं पदानां योजना । ततश्च याजनाध्यापनयोरपि पतनमेवेति गम्यते । यत्र च याजनादि कारयिष्यामीत्येवं तन्निमित्ते यानासनादावपि प्रागेव संवत्सरात् पतनम्, तत्र तदाचरणे सद्य एवेत्येतत् सामर्थ्यसिद्धमेवेत्यभिप्रायः । ततश्च यदि प्रकारान्तरेण योनिसंबन्धो भवति, ततः पतनम् । यथोक्तेन तु प्रकारेण सोपवासामकिञ्चनां चोद्वहतो निर्दोषत्वमित्यनवद्यम् । यदपि गौतमेन पतितात्यागिन पतितत्वमुक्तं, तदपि यौनादिद्वारकमेव, अन्यत्र "तैश्चाब्दं समाचरन्नि"त्यारम्भात् । अतो याजनादिना ये पतितेन सह व्यवहरन्ति, ते पतितात्यागिनः । ये त्वौचित्यात् प्रसक्तमपि याजनाद्यपतितस्यैव पतितोऽयमिति कृत्वा न कुर्वन्ति, ते त्वपतितत्यागिनः । ये तु ग्राह्यवचनत्वेन संभाविताः क्रोधादिना सन्देहमात्रेऽपि परिषदि नियुक्ताः सन्तो निस्सन्दिग्धं पतितत्वं समर्थवादितया समर्थयन्ति, ते पातकसंयोजकाः । तैश्च मुख्यपतितैरिव संवत्सरं य आचरेत्, सोऽपि संसर्गपतितः, "तैश्चाब्दं समाचरन्नि"ति वचनात् । ये तु संवत्सरं व्यवहरन्तः पतिता भवन्ति, तत्संपर्केऽन्येषां पतनं नास्ति । तदुक्तं—"पञ्चमश्चाचरंस्तैरि"ति, पञ्चमग्रहणस्याधिकनिवृत्त्यर्थत्वादित्येषा दिक् । अत्र च वसिष्ठेनोक्तं—"पतितसंप्रयोगे तु ब्राह्मेण यौनेन वा यास्तेभ्यः सकाशान्मात्रा उपलब्धास्तासां त्यागस्तैश्च न संवसेद् उदीचीं

१. 'यः । त' ख. ङ. पाठः. २. 'मिति', ३. 'रमे' च. पाठः.

दिशमुपनिष्क्रम्यानश्नन् संहिताध्ययनमधीयानः पूतो भवतीति विज्ञायत" इति । तेभ्य. सकाशादिति वचनाद् यास्त्वपतितेभ्यस्तदीयभ्यो ज्ञातिसखिप्रभृतिभ्यस्तेनैव हेतुनोपलब्धास्तासामत्याग एव । मात्राग्रहणं च ताम्बूलादेरपि तदीयस्य त्यागो यथा स्यादित्येवमर्थम् । उपलब्धा इति चासश्चेतितास्वदोषार्थं, सश्चेतितानां च स्वरूपनाशेऽपि तत्तुल्यस्यान्यस्य त्यागार्थम् । तैश्च न संवसेदिति प्रायश्चित्तारम्भादेव सिद्धत्वादेकग्रामवासनिवृत्त्यर्थम् अन्तिकवासनिवृत्त्यर्थं वा । स्पष्टमन्यत् । शङ्खेनाप्युक्तं — "पतितसंव्यवहारिणो जलशयनं पञ्चतापमभ्रावकाशं चानुतिष्ठेयुर्ग्रीष्मवर्षाहेमन्तेषु मासं वा गोमूत्रयावकं पिबेयुरेवं शुध्यन्ती"ति । तथा महापातकमध्ये "तैश्च सह सप्रयोगश्च स पञ्चमः पातक" इत्युक्तं, न च तत्र प्रायश्चित्तमुक्तम् । अतो यत् सामान्येनोक्तं "पतितो ह्यात्मानमुद्धरेत् संवत्सरं तप्तकृच्छ्रमाचरेत्" इत्यादि ब्रह्महत्याप्रकरणे व्याख्यातं, तदेव संप्रयोगिणोऽभिप्रेतमिति गम्यते । तथा संवर्तेऽपि चतुर्णां महापातकानां प्रायश्चित्तान्युक्त्वोक्तम्—

"एभिः संपर्कमायाति यः कश्चित् पापमोहितः ।
षण्मासमब्दमेकं वा पूर्वोक्तानां व्रतं चरेत् ॥"

इति । अत्र चैभि षण्मासमब्दमेकं वा य संपर्कमायाति, स पूर्वोक्तानां व्रतं चरेदिति केचिद्योजयन्ति । तथा सत्यब्दग्रहणात् सिद्धे सत्येकं वेत्यवक्तव्यं स्यात् । अतः प्रायश्चित्तकालोपदेशोऽयं न संपर्ककालस्य । तेनायं श्लोकार्थः — य एभिर्ब्रह्मप्रभृतिभिः स्मृत्यन्तरानुसारेण 'संवत्सरेण पतती'त्यादिना संपर्कमाभिमुख्येन याति, स एषां पूर्वोक्तानां यद् व्रतं द्वादशाब्दाद्युक्तं तदेव षण्मासमेकं वाब्दं चरेदिति । वाशब्दाच्च द्वौ वा त्रीन्वा इत्येतदपि गम्यत एव । तथा षण्मासं त्रीन्वा मासानिति । एवं सुमन्तुनापि सुवर्णस्तेयस्योक्त्वा "सुवर्णस्तेयी मासं सावित्र्याष्टसाहस्रमाज्याहुतीर्जुहुयात् सर्वकृच्छ्रं च पूतो भवती"ति, तत उक्तं "यश्चैतैः सह यौनमुख्यब्राह्मणां संबन्धानामन्यतमेन संपर्कं कुर्यात्, तस्याप्येतदेव प्रायश्चित्तं विदध्यादि"ति । आनन्तर्याच्चैतदेव स्तेयसबद्धमिति गम्यते, न

१. 'स्वल्पा' च. पाठः. २. 'ब्दिकाद्यु', ३. 'त्रिर्वा इ' ग. च. पाठः.
४. 'स पू' ङ. पाठः ५. 'न वा सं' ङ. च. पाठः.

तु येन संपर्कस्तदीयमेवेत्येवं योजनोपपद्यते। शातातपे तु—"पतित-संव्यवहारी तप्तकृच्छ्रेण शुध्यति" इत्येवम्। स्मृत्यन्तरेषु तु पतितसंपर्क-प्रायश्चित्तानि मानवेनैकार्थान्येव—

"यो येन पतितेनैषां संपर्कं याति मानवः।
स तस्यैव व्रतं कुर्यात् तत्संसर्गविशुद्धये॥"

इति। सर्वथात्रायं सिद्धान्तः—पतितसंप्रयोगे कामकृते याजनाध्यापनादौ यो येन पतितेनेत्येतदुक्तयैव विषयव्यवस्थया स्यात्। तत्रापि च संपर्के मरणान्तिकं नैव भवति, तत्संसर्गविशुद्धय इत्यारम्भात्। अन्यथा त्वय-मन्त्यः श्लोकपाठोऽनर्थक एव स्यात्। अतः पतितसंपर्कं विशोधयितुमप-तितैः सह संपर्कसिद्ध्यर्थं तस्यैव यज्जीवप्रायश्चित्तं तत् कुर्यादिति। मरणा-न्तिकार्हेणापि संपर्के गुरुतरं कल्प्यं न मरणान्तिकं द्वादशाब्दं वा, "षण्मा-समब्दमेकं वे"ति संवर्तवचनात्। नाप्यस्य द्वादशाब्दं युक्तं, मरणान्ति-केन तुल्यकल्पत्वात्। न च द्वादशाब्दार्हेणापि संपर्के स्वयं तदनर्हस्य तद्युक्तम्। न च यथाविधोऽनुबन्धो हन्तुः, तथाविधः संसर्गे संभवति। हन्ता हि विद्यावृत्ततपःसंपन्नं सवनगतं च ब्राह्मणं तस्यैव महासतीं योषितमपहर्तुं कामतो हन्यात्। न च तेन सह संसर्गे तथाविधोऽनुबन्धः संभवति। अतः संसर्गहेत्वपेक्षयैव तस्य प्रायश्चित्तं कल्प्यं, न च तत्क-ल्पनायां कल्पान्तरस्यानुप्रवेशः, येन पूर्वोक्ता कल्पना स्यात्। ततो या-न्येतानि स्मृत्यन्तरेषु संसर्गोद्देशेन विशेषविहितानि, तैरेव सह सामान्यो-पदिष्टानां विषयकल्पना युक्ता। न च तैः सह द्वादशाब्दिकं मरणान्तिकं वा शक्यं कल्पयितुम्। अतोऽपि यान्येव सरस्वतीगमनसंहिताजपसंवत्स-रकणपिण्याकभक्षणतुल्यानि, तान्येव कामकृते संसर्गे घोरतरानुबन्धे च सरस्वत्याद्यर्हसंपर्के च विशेषविहितानि पूर्वमुदाहृतानि प्रत्येतव्यानि। पर-स्परं तु विषयकल्पना ज्ञातैवेत्यलं प्रसङ्गेन। चण्डालसंपर्कप्रायश्चित्तान्यप्य-

१. 'तु सं' ङ. च. पाठः, २. 'क्त, तयै' ग. पाठः. ३. 'त. सं' ङ. पाठः. ४. 'तुं प' ग पाठः. ५ 'णं द्वा', ६ 'ब्दिकं वा' ग. च. पाठः. ७. 'पर्के व' ग. पाठः. ८. 'ब्दिकं यु' ग. च. पाठः ९. 'तथा हि' ग. पाठः. १०. 'ल्पनान्त', ११. 'ते' ग. पाठः. १२. 'न तैः' च. पाठः. १३. 'तो वा' ग. च. पाठः.

नेनैव मार्गेण व्याख्येयानि । तत्रापि —

"चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च ।
पतत्यज्ञानतो विप्रो ज्ञानात् साम्यं तु गच्छति ॥"

इति मानवे पतितत्ववचनात् पतितप्रायश्चित्तानि सर्वाणि प्रसज्यन्ते । ज्ञानात् साम्यं तु गच्छतीति च प्रायश्चित्ताभाव एवैवंविधस्य कामतो व्यवहरेत इत्येवमर्थम् । अतश्च पतितसम्पर्काद् गुरुतरस्तत्संपर्क इति ज्ञायते, न त्वभावे एव प्रायश्चित्तस्येत्यभिप्रायः । तेनात्र द्वादशाब्दिकं मरणान्तिकं च प्राप्नोत्येव । संपर्ककालस्य चानभिधानात् पूर्वप्रकृत एव कालोऽत्रापि द्रष्टव्यः —

"संवत्सरेण पतति पतितेन समाचरन्"

इति, स्पर्शाधिकारे च —

"दिवाकीर्त्यमुदक्यां च पतितं सूतिकां तथा"

इत्येकप्रकरणपाठात् । अतः संवत्सरात् परतः कामसंसर्गे मरणान्तिकम्, अर्वाक् प्रायश्चित्तान्तराणि महापातकप्रकरणोक्तानि [illegible]स्थया योज्यानि । तथा स्मृत्यन्तरेष्वपि चण्डालसंकरे, यथा वासिष्ठे — "गुर्वीसख्यादिगमने कृच्छ्राब्दपादं चरेत्" इत्युक्त्वोक्तम् — "एतदेव चण्डालपतितान्नभोजनेष्वि"ति । अत्र च कृच्छ्रगणनया सप्त सार्धानि कृच्छ्राणि । तेनैतत् सप्तरात्रं भुक्त्वा कुर्यात् । कुत एतत्,

"भुक्त्वातोऽन्यतमस्यान्नममत्या क्षपणं त्र्यहम् ।
मत्या भुक्त्वा चरेत् कृच्छ्रं रेतो विण्मूत्रमेव वा ॥"

इति मनुवचनात्, तन्मध्ये च पतितस्योक्तत्वात् —

"अभिशस्तस्य षण्डस्य पुंश्चल्या दांभिकस्य च"

इति । यदि तु अभिशस्तोऽन्तरेणापि पतनं महापातकाभिशस्तो गृह्यते, तथापि दण्डापूपिकया महापातकिनां भेदेनानभिधानेनैवाभोज्यत्वसिद्धेः

१ 'तव' ग. पाठः. २. 'हारइ' ङ, 'हा' च. पाठः. ३. 'वः प्रा' ग. च. पाठः ४. 'स्यान', ५ 'र्वक्र', ६. 'थाच स्मृ', ७. 'वैतत्' ङ. पाठः. ८. 'पवद म' ग, 'पिकवद ग' च. पाठः ९. 'नेऽप्यभो' च, 'ने सप्त-नेनै' ग. पाठः.

सकृद्भोजने मत्या कृच्छ्रम् । ततश्चावृत्तिविषयत्वाद् वासिष्ठं "कृच्छ्राब्दपादं चरेदि"त्येतत् सप्ताहविषयमिति स्थितम् । चण्डालभोजनं तु यद्यपि पतितभोजनाविशेषेण पठ्यते, तथापि लोकोपचारान्मानवाच्च ज्ञापकाद् गुरुतरमेव । अतश्चाकामतश्चण्डालान्नभोजने कृच्छ्रं, कामतस्तु सकृद्भोजनेऽपि पतनमेव, "ज्ञानात् साम्य तु गच्छती"ति मनुवचनात् । अज्ञानतस्तु संवत्सरेण पतनम् । प्राक् तु संवत्सरात् पतितसंपर्कवद् विषयकल्पना । यत्र त्वज्ञातश्चण्डालादिः कस्यचिद् गृहेऽवतिष्ठते, तेन च सह्यान्ये व्यवहरन्ति न तु साक्षात् तेन चण्डालादिना, तेषां प्राक् संवत्सरादूर्ध्वं च षण्मासात् संवर्तोक्तं —

"चण्डालसङ्करे विप्रः श्वपाके पुल्कसेऽपि वा ।
गोमूत्रयावकाहारो मासेनैकेन शुध्यति ॥"

इति । अत्र सङ्करमात्रं उक्तं, न तु साक्षात्संबन्धे । तथाच काश्यपः— "चण्डालश्वपाकपुल्कसादिसङ्करे [10] संव्यवधाने षण्मासान् गोमूत्रयावकौः [11] पञ्चाहकालं पातव्याः [12] । एवं प्रतिमासवृद्ध्या वृद्धिरा परिवृत्तेः सूर्यस्ये"ति । सूर्यपरिवृत्तिश्च षण्मासेन भवति । अतः प्राक् षण्मासादित्ययमस्यार्थः । विप्रग्रहणात्तु [13] ब्राह्मणस्यैवैतत् । इतरेषां तु कृच्छ्रत्रयम् [14] । तच्च प्राजापत्यं स्यात् । यथाह सुमन्तुः—"अगम्यागमने स्त्रीवधचण्डालसंकरे च कृच्छ्रत्रयं चरेदि"ति । साक्षात्तु यस्य गृहे स्थितः, तस्य पराशरोक्तम् —

"अविज्ञातस्तु चण्डालो निवसेद् यस्य वेश्मनि ।
विज्ञानेनोपसन्नस्य विप्राः कुर्वन्त्यनुग्रहम् ॥
ऋषिवक्त्रच्युतान् धर्मान् पठन्तो धर्मपाठकाः ।
पतन्तमुद्धरेयुस्तं [15] धर्मशास्त्रविशारदाः ॥
दधिक्षीरघृतैर्युक्तं [16] कृच्छ्रं गोमूत्रयावकम् ।
भुञ्जीत सहितो भृत्यैस्त्रिसन्ध्यमवगाहयन् ॥

१. 'नादवि' ग. च. पाठः २. 'पि दण्डालं' च. पाठः. ३ 'श्च चण्डा', ४. 'तु व', ५. 'स्य' ङ. पाठः ६. 'ज्ञानत' ग. पाठः ७. 'त्रमुक्त', ८ 'तु षण्मासात्सं' ग. च. पाठः. ९. 'न्धः' ग. पाठः. १०. 'स' ङ. च. पाठः. ११. 'कृप' ग पाठः. १२. 'श्च' ग. ङ. पाठः. १३. 'णा ब्रा' ग., 'णाद् ब्रा' च. पाठः. १४. 'च्छ्रम् । त' ङ. पाठः. १५. 'र्न' ग. पाठः. १६. 'त्रा वराः ॥' ग. च. पाठः.

दध्नादौ त्रियहं पूर्वं सर्पिषा च ततः परम् ।
क्षीरेण त्रियहं भोज्यमेकैकेन पुनस्तथा ॥
तिष्ठेद् दिनानि यावन्ति तावन्त्येवं समाचरेत् ।
भावदुष्टं न भुञ्जीत प्रकृत्या गोरसप्लुतम् ॥
त्रिपलं तु दधि क्षीरं पलमात्रं तु सर्पिषः ।
अशक्तावुपवासेन फलमूलाशनेन वा ॥
आकरेषु भवेच्छुद्धिस्तैजसानामशेषतः ।
जलशौचेन वस्त्राणां मृन्मयानि परित्यजेत् ॥
कुसुंभं गुलकार्पासं लवणं तैलसर्पिषी ।
द्वारे कुर्वीत धान्यानि दद्याद् वेश्मनि पावकम् ॥
स पूतः सहितो भृत्यैः कुर्याद् ब्राह्मणभोजनम् ।
विंशद्गावो वृषं चैकं ब्राह्मणेभ्यो निवेदयेत् ॥
एवं स शुद्धिमाप्नोति पराशरमतं यथा ।"

इति । कृच्छ्रमिति गोमूत्रयावकविशेषणम् । ततश्च यथा कृच्छ्रो दुरभ्यवहार्यो भवति, तथा केवले गोमूत्रे कर्तव्यः । स यथोक्तपरिमाणैर्दध्यादिभिरुपसिक्तो भोक्तव्यः । सपर्कानुरूप्येण च भृत्यानां गृहपतेश्च कालनियमः । द्वादशरात्रार्वाक् प्राग्विज्ञाने सत्येतत् प्रायश्चित्तम् । परतस्त्वेतदेवाहःसंख्ययाभ्यसितव्यम् । दक्षिणा त्वेतावत्येव । संवत्सरात्तु परतो ब्रह्महत्यायामिव स्यात् । वर्षत्रयात्तु परतो मरणान्तिकमेव । अन्येषां तु तत्संसर्गिणां संवत्सरादूर्ध्वं पतितसंपर्कवद् विषयकल्पनेत्यलमतिप्रसङ्गेन । चण्डालपरिगृहीतोदकपाने तु क्षुल्लकं सान्तपनं,

"गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
एकरात्रोपवासश्च श्वपाकमपि शोधयेत् ॥"

इति वचनात् ।

"चण्डालावर्जिते चान्ने स्पृष्ट्वा चैनं विशेषतः ।
भुक्त्वा कृच्छ्रमविज्ञाते ज्ञात्वा चान्द्रायणं चरेत् ॥"

---

१. 'ब' द्यु', २. 'मवाप्नो' ग. पाठः. ३. 'वर्तितव्यः' क. पाठः. ४. 'तु' ग. पाठः.

इत्यत्रिवचनं स्पष्टार्थमेव । तथा —

"चण्डालपरिगृहीता अपः किञ्चित् पिबेद्यदि ।
अहोरात्रोषितः स्नात्वा पञ्चगव्येन शुध्यति ॥
चण्डालेन च संस्पृष्टं पिबेत् किञ्चिदकामतः ।
अत्र सान्तपनं कृच्छ्रं चरेच्छुद्ध्यर्थमात्मनः ॥
अन्तावसायिनामन्नमश्नीयाद् यस्तु कामतः ।
स तु चान्द्रायणं कुर्यात् तप्तकृच्छ्रमथापि वा ॥"

इत्याङ्गिरसाः श्लोकाः । तत्र चण्डालेन च साक्षात् यत् स्पृष्टं यत् तदीयं चाज्ञानात् कथञ्चित् पिबति यस्तस्य महासान्तपनम् । यस्त्वकामत एव तत्परिगृहीतकूपादौ, तस्य क्षुल्लकसान्तपनम् । यस्तु ज्ञात्वा तदीयमेवान्नं स्वयं संस्कृत्य भुङ्क्ते, तस्य चान्द्रायणम् । यस्त्वाचमनार्हाणां प्रतिलोमानां कामतः पक्वान्नं भुङ्क्ते, तस्य तप्तकृच्छ्रम् । यस्त्वकामतस्तस्य प्राजापत्यं,

"भुक्त्वा तु प्रतिलोमानां सूतादीनामकामतः ।
प्राजापत्यं चरेत् कृच्छ्रं त्रिरात्रं त्वाहुताशनः ॥"

इत्यत्रिवचनात् । मानवेऽपि च —

"भुक्त्वातोऽन्यतमस्यान्नममत्या क्षपणं त्र्यहम्"

इति तदीयं पक्वान्नमाहृतमेव भुक्त्वा प्रत्येतव्यम् । तदीयगृहभोजने तु याज्ञवल्क्योक्तं चतुरहमित्येषा दिक् ।

अन्ये तु "भुक्त्वातोऽन्यतमस्यान्नमि"त्येवमादीन्यर्थवादत्वेन व्याचक्षते — प्रायश्चित्तप्रकरण एव यत् पठ्यते तदेव प्रायश्चित्तार्थं भवति, अप्रकरणे त्वर्थवादतैव युक्तेति वदन्तः । तथा सति शतपथे मध्यमकाण्डे प्रायश्चित्तप्रकरणे पौरोडाशिके काण्डेऽभिहितं — "स्कन्नमभिमृशति भूपतये स्वाहे"त्यादि, तस्याप्यर्थवादत्वं स्यात् । न च स्मृतावर्थवादानां तन्मात्रपर्यवसानं युक्तमित्युक्तमेव । न चात्र किञ्चिदर्थवादसारूप्यमस्य स्यात् । अतोऽर्थवादो नाम वाक्यप्रकारोऽस्ति, तमप्यहं जानामीत्येतावानेवाभिप्रायः । इत्युपेक्षणीयम् ॥ २५७ ॥

---

१. 'बि' ग. च. पाठः. २. 'न्द', ३. 'त्वार्थं' ग. पाठः.

एवं पञ्चानामपि[1] महापातकानां प्रायश्चित्तमुक्तम् । इदानीं[2] जातित उत्कृष्टानां जातितोऽपकृष्टानां वधे प्रायश्चित्तमाह —

**चान्द्रायणं चरेत् सर्वानपकृष्टान् निहत्य तु ।**
**शूद्रोऽधिकारहीनोऽपि कालेनानेन शुध्यति ॥ २५८ ॥**

ब्राह्मणः क्षत्रियादीन्, क्षत्रियो वैश्यादीन्, वैश्यो रथकारादीन्, शूद्रश्च प्रतिलोमादीनात्मनो[3] निकृष्टान्निहत्य चान्द्रायणं कुर्यात् । ननु च शूद्रस्य जपग्रासानुमन्त्रणानधिकार एव । सत्यमेवम् । किन्तु अधिकारहीनोऽपि शूद्रः कालेनानेन शुध्यति । मासं मयूराण्डकप्रमाणानेकोपचयादिना ग्रासानश्नन् मन्त्ररहितो विशुध्यतीत्यभिप्रायः । अन्ये तु क्षत्रियादिवधे प्रायश्चित्तान्तरस्य वक्ष्यमाणत्वात् प्रतिलोमवध एवैतत् प्रायश्चित्तमिति व्याचक्षते । तथा सति सर्वानपकृष्टानित्यत्र सर्वशब्दोऽनर्थकः स्यात् । तथाहि शङ्खः "सर्वेषामन्योन्यापकृष्टवधे चान्द्रायणम्" [illegible]गैवाह । अविशेषाभिधानेऽपि च क्षत्रियवध एव ब्राह्मणस्य चान्द्रा[illegible]म् । वैश्यवधे तु न्यूनमन्यत् कल्प्यम् । अन्योन्यापकृष्टवध इति वचनाच्चान्द्रायणप्रकारापेक्षया व्यवस्था कल्प्या । यत्तु क्षत्रियादीनां वैशेषिकं, तन्निकृष्टस्यैव हन्तुरुत्कृष्टवधे विज्ञेयम् । तत्रैव च विशेषं वक्ष्यामः ॥ २५८ ॥

यदि त्वपकृष्टेऽपि क्षत्रियादौ देशान्तरगते व्यापादिते स्वयं क्षत्रियोऽयमित्येव जानन्नपि द्वेषाद् ब्राह्मणोऽयमनेन व्यापादित इत्येवं मिथ्यैव कश्चिदभिशंसेत्, तस्यापि किं दोषः प्रायश्चित्तं वा भवेदुत नेति, तथा यथावस्थितमप्यविज्ञातं लोके ब्राह्मणादिवधमन्यद् वा पापं योऽभिशस्य ख्यापयति, तस्यापि किमित्यत आह—

**मिथ्याभिशंसिनो दोषो द्विः समो भूतवादिनः ।**
**मिथ्याभिशस्तपापं च समादत्ते मृषा वदन् ॥ २५९ ॥**

यस्तावन्मिथ्यैवाभिशंसेत् तस्य द्विर्दोषः, द्विगुणमित्यर्थः । यस्तु भूतमेवार्थमप्रख्यातमभिशस्य प्रख्यापयति, तस्याभिशस्यमानेन तुल्यदोषत्वम् । कस्मात् पुनर्मिथ्याभिशंसिनो द्विगुणदोषत्वं, यस्मादभिशंस-

---

१ 'ना म', २. 'नीमुत्क' ङ. पाठः. ३. 'माना' ग. घ. पाठः. ४. 'तस्य' च. पाठः. ५. 'या वा व्य' ङ. च. पाठः.

नात् पातकसंयोजकतया पतितत्वोपदेशात् तुल्यत्वं तावदस्त्येव। अन्यच्च—यत्तस्य मिथ्याभिशंसनकृतं पापं, तदसौ सम्यगादत्ते मृषा निर्दोषस्यैव दोषवत्तां वदन्। तस्माद्धन्तुर्न तावत्तस्य दोषोऽस्ति, अतो यश्चाध्यारोपितः, यश्चाध्यारोपकत्वेन ग्राहः, तौ द्वावपि तस्यैव दोषावित्युपपन्नम्। द्विगुणदोषत्वं तावत् पूर्वोक्तेनैव प्रकारेण सिद्धम्। किञ्च अन्यदपि यत्किञ्चित् तेन पापं कृतं, तदप्यसावेव मिथ्याभिशंसनादादत्ते। ततश्चाभिशस्तः पूर्वकृतादपि पापान्मुच्यते इत्यभिप्रायः। युक्तं चैतत्, दुःखोपभोगस्य पापक्षयहेतुत्वात्। यत्त्वभिशस्तस्य प्रायश्चित्तावधानं, तदुत्तरत्र वक्ष्यामः ॥ २५९ ॥

एवं महापातकप्रायश्चित्तानि सप्रपञ्चमभिधायेदानीमुद्देशक्रमापेक्षयेवोपपातकप्रायश्चित्तानामवसरः। तत्र प्राथम्याद् गोवधमाह—

**पञ्चगव्यं पिबन् गोघ्नो मासमासीत संयतः।**
**गोष्ठेशयो गोनुगामी गोप्रदानेन शुध्यति ॥ २६० ॥**

पञ्चगव्यं चात्र भोजनार्थम्। ततश्च गोमूत्रादीनि पञ्चापि तुल्यप्रमाणान्येकत्रालोड्य प्रत्यहं सकृद्भोक्तव्यानि। संयमश्चात्र चान्द्रायणेतिकर्तव्यतयावस्थानं, स्मृत्यन्तरोक्तं वा गोचर्मधारणगोमूत्रस्नानादि। संयमवचनादिह तु वक्तव्यमेवम्। गोघ्नो मासं पञ्चगव्यमश्नन् गोष्ठ एव गोरुपसन्निधौ शयनं रात्रौ कुर्वन् दिवा च गोनुगामी यथा च गावः स्वेच्छया सुखेन गच्छन्ति तथा गच्छन्तीनां परिचारकत्वेनानुगामी स्यादित्यर्थः। ततोऽन्ते गोप्रदानं कृत्वा शुद्धः स्यात्। लिङ्गस्य चानभिव्यक्तत्वादृषभधेनुदानं च यथालिङ्गं योज्यम् ॥ २६० ॥

तथेदमन्यद् गोवध एव —

**कृच्छ्रं चैवातिकृच्छ्रं च चरेद् वापि समाहितः।**
**दद्यात् त्रिरात्रं वोपोष्य ऋषभैकादशास्तु गाः ॥ २६१ ॥**

---

१. 'तत्वं', २. 'मार्गेण', ३. 'कमेतच्च, दुः' ग. पाठः. ४. 'व्याख्यास्यामः॥' ग. च. पाठः. ५. 'मेणोप' च. पाठः. ६. 'बेद् मे', ७ 'क' ग. च. पाठः. ८ 'वा गा' ग. पाठः.

अत्र कृच्छ्रं चैवेत्येवकारादपिशब्दाच्चैकैकमपि प्रायश्चित्तमिति गम्यते। अतश्चैतानि प्रायश्चित्तानि त्रीणि कृच्छ्रमतिकृच्छ्रमुभयं च। समाहितशब्दश्च पूर्ववत् स्मृत्यन्तरोक्तधर्मप्राप्त्यर्थः। तथेदमन्यत्—त्रिरात्रोपोषितो दश गा एकादशं च ऋषभं दद्यात्। एवमेतानि पञ्च गोघ्नप्रायश्चित्तानि श्लोकद्वयोक्तानि विषयव्यवस्थया योज्यानि। केचित् त्रीण्येवैतानीति व्याचक्षते, कृच्छ्रातिकृच्छ्रयोः समुच्चितयोरेव प्रायश्चित्तत्वात्। तथा सति त्रीण्यपि समानत्वादिच्छयैव विकल्प्यन्ते। अन्ये तु पञ्चगव्यं पिबेन्मासं कृच्छ्रं चैवातिकृच्छ्रं च चरेदित्येकमेवेच्छन्ति। अपिशब्दाच्च अपिवा पूर्वानपेक्ष्य कृच्छ्रं चैवातिकृच्छ्रं चेत्येवं योजयन्ति, स्मृत्यन्तरानुसारात्। तथा च हारीतो मानवं त्रैमासिकमभिधायाह—

"पञ्चगव्येन वा मासं स्थित्वा कृच्छ्रद्वयं चरेत्"

इति। अविशेषाभिधानेऽपि चैतदनुसारादेव द्वितीयमतिकृच्छ्रं प्रत्येतव्यम्॥ २६१॥

एतदेवोपपातकान्तरेष्वपि प्रायश्चित्तान्तरैः सह वैकल्पिकत्वेनातिदिशति—

**उपपातकशुद्धिः स्यादेवं चान्द्रायणेन वा।**
**पयसा वापि मासेन पराकेणापि वा पुनः॥ २६२॥**

सर्वस्यैवोपपातकमध्यपठितस्यायाज्ययाजनपारदार्यादेरुपपातकस्यैवं पूर्वश्लोकद्वयोक्तैर्गोघ्नप्रायश्चित्तैः शुद्धिः स्यात्। यद्वा चान्द्रायणेन। यद्वा मासं पयोव्रतत्वेन। यद्वा पराकेण। पराको द्वादशरात्रोपवासः। पुनःशब्दाच्च व्यस्तसमस्ततया प्रयोगोऽभ्यासेन च। स्मृत्यन्तरानुसाराच्च व्यवस्था कल्पनीया। अत्र च स्मृत्यन्तरेष्वनेकप्रकाराणि गोघ्नप्रायश्चित्तानि पठ्यन्ते। तथोपपातकान्तरेष्वपि। वैशेषिकाणि च बहुषु बहूनि पठ्यन्ते। तेषामपि तु प्रसङ्गनिरूपणा युक्तैव कर्तुम्। यथा तावन्मानवे—

"एतैर्व्रतैरपोह्येयुर्महापातकिनो मलान्।
उपपातकिनस्त्वेवमेभिर्नानाविधैर्व्रतैः॥"

---

१. 'वे' ग. पाठः. २ 'च्छ्रं च' ग. क. पाठः. ३. 'क्ष:' क. ख. पाठः
४. 'था हा' क. पाठः. ५. 'वर्गप' ग. ख. पाठः. ६. 'पि प्र' क. पाठः.

इत्युक्त्वोक्तम्—

"उपपातकसंयुक्तो गोघ्नो मासं यवां पिबेत् ।
कृतवापनो वसेद् गोष्ठे चर्मणा तेन संवृतः ॥
चतुर्थकालमश्नीयादक्षारलवणं मितम् ।
गोमूत्रेणाचरन् स्नानं द्वौ मासौ नियतेन्द्रियः ॥
दिवानुगच्छेत् ता गास्तु तिष्ठन्नूर्ध्वं रजः पिबेत् ।
शुश्रूषित्वा नमस्कृत्वा रात्रौ वीरासनी वसेत् ॥
तिष्ठन्तीषु च तिष्ठेत व्रजन्तीष्वप्यनुव्रजेत् ।
आसीनासु तथासीत नियतो वीतमत्सरः ॥
आतुरामभिषक्तां च चोरव्याघ्रादिभिर्भयैः ।
पतितां पङ्कलग्नां च सर्वप्राणैर्विमोक्षयेत् ॥
उष्णे वर्षति शीते वा मारुते वाति वा भृशम् ।
न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः ॥
आत्मनो यदि वान्येषां क्षेत्रे गेहेऽथवा खले ।
भक्षयन्तीं न कथयेत् पिबन्तं चैव वत्सकम् ॥
अनेन विधिना यस्तु गोघ्नो गा अनुगच्छति ।
स गोहत्याकृतं पापं त्रिभिर्मासैर्व्यपोहति ॥

केचित् तु "त्रिभिर्वर्षैरि"ति पठन्ति ।

ऋषभैकादशा गास्तु दद्यात् सुचरितव्रतः ।
अविद्यमाने सर्वस्वं वेदविद्भ्यो निवेदयेत् ॥
एतदेव व्रतं कुर्युरुपपातकिनो द्विजाः ।
अवकीर्णिवर्ज्यं शुद्ध्यर्थं चान्द्रायणमथापि वा ॥"

इति । आङ्गिरसेनाप्येवमेवोक्तम्—

"उपपातकसंयुक्तो गोघ्नो भुञ्जीत यावकम् ।
अक्षारलवणं रूक्षं षष्ठे कालेऽस्य भोजनम् ॥
कृतवापनो वसेद् गोष्ठे चर्मणा तेन संवृतः ।
द्वौ मासौ स्नानमप्यस्य गोमूत्रेण विधीयते ॥

1. 'भवेत् ।' ग. च. पाठः.

पानशौचक्रियाकार्यमद्भिः कुर्वीत केवलम् ।
व्रतवद् धारयेद् दण्डममन्त्रां चैव मेखलाम् ॥
गाश्चैवानुव्रजेन्नित्यं रजस्तासां पिबेत् सदा ।
गोमतीं च जपेद् विद्यामोङ्कारं वेदमेव च ॥"

अन्यत् तु सर्वं मानवेनाविशिष्टम् । अयं तु विशेषः—

"अनेन विधिना यस्तु गोघ्नो गा अनुगच्छति ।
स गोहत्याकृतं द्वाभ्यां मासाभ्यां वै व्यपोहति ॥"

इति । तथा "दक्षिणायामविद्यमानायां तद्वर्णं तल्लिङ्गं वोपपादयेत्" इति । संवर्तस्तु—

"गोघ्नः कुर्वीत संस्थानं गोष्ठे गोरूपसंनिधौ ।
तत्रैव शयनं चास्य मासार्धं क्षितिशायिनः ॥
सक्तुयावकभैक्षाणि पयो दधि च संयतः ।
एतानि क्रमशोऽश्नीयान्नरस्तत्पापमोक्षकैः ॥
शुध्यते सोऽर्धमासेन नखरोमविवर्जितः ।
स्नानं त्रिषवणं कुर्यात् संयतो वीतमत्सरः ॥
गायत्रीं च जपेन्नित्यं पवित्राणि च सर्वशः ।
पूर्णे चैवार्धमासे तु स विप्रान् भोजयेत् ततः ॥
भुक्तवत्सु तु विप्रेषु गा दद्याच्छक्तितो द्विजः ।"

इति । तथा कश्यपेन गोवधमेवाधिकृत्योक्तं—"प्रायश्चित्तमकामावासौ, कामकृतेऽप्येके ।" दोग्ध्रचारादीनां प्रायश्चित्तं दोग्ध्रीधमनदानेन । तदामयाशङ्कायां च घण्टाभरणभूषणयोजने वा पानतैलौषधभेषजक्रियाभिर्विनियोगैर्व्यापन्नानां प्रायश्चित्तं—"ब्राह्मणेभ्यो निवेदयित्वा सशिखं वपनं कृत्वा प्राजापत्यं कृच्छ्रमाचरेत् । चीर्णान्ते धेनुं तिलधेनुं दद्यादि"ति काश्यपः । अथान्यो वर्णः—"तेन चर्मणा प्रावृतो मासं गोष्ठे वसेत् । त्रिषवणस्नायी नित्यं पञ्चगव्याहारः षष्ठान्नकालं पयोभक्षी वा गच्छन्तीष्वनुगच्छेत् तासु स्तब्धासु नोपविशेत् । नातिप्लवं गच्छेत् । न विषमेणावतारयेत्, नाल्पोदके नाल्पयवसे वा । अन्ते ब्राह्मणतर्पणं कुर्यात् ।

१. 'मप्य.वे' च. पाठ.. २, ३. 'त', ४. 'ं गो' ग. पाठ. ५. 'ण्टका' ङ:, 'टाभ' ग पाठः. ६ 'ल' ङः, 'ल.' च. पाठः

धेनुं तिलधेनुं वा दद्यादि''ति काश्यपः । तथा शांखेऽपि "गोघ्नः पञ्चगव्याहारः पञ्चविंशतिरात्रं तिष्ठेत् । सशिखं वपनं कृत्वा गोचर्मणा प्रावृतो गा अनुगच्छेत् । गोष्ठे वसेत् । गोप्रदानं च कुर्याद्" इति । वासिष्ठे तु — "गां चेद्धन्यात्, तस्याश्चर्मणार्द्रेण प्रावृतः षण्मासं कृच्छ्रं तप्तकृच्छ्रं वानुतिष्ठेत् । तयोर्विधिरि''ति तत्स्वरूपमुक्त्वा "ऋषभवेहतौ च दद्याता-मि''त्युक्तम् । पैठीनसिनापि — "गोघ्नो यवागूं प्रसृतितण्डुलशृतां मासं भुञ्जानो गोष्ठः प्रियं कुर्वाणः शुध्येदि''ति । सुमन्तुस्तु — "गोघ्नस्य गोष्ठे शयनं द्वादशरात्रं पञ्चगव्यभोजनं गवामनुगमनं चे''ति । तथा यमोऽपि —

"पादपाशनिबन्धाद्वा अतियोक्त्रातिवाहनात् ।
नदीकान्तारसन्तारश्वभ्रभृग्वद्रिपातनात् ॥
एवं गौर्म्रियते यत्र तत्र शुद्धिर्विधीयते ।
सशिखं वपनं कृत्वा मौनी कौपीनवस्त्रधृक् ॥
गोमूत्रयावकं मासमश्नन् गोभिः समं व्रजेत् ।"

इति । तथात्रैवापरम् —

"उपपातकसंयुक्तो गोघ्नो भुञ्जीत यावकम् ।"

इत्याङ्गिरसेनैवाविशिष्टं ग्रन्थतोऽर्थतश्च । अयं तु विशेषः —

"गायत्र्या दशसाहस्रं जप्यं कुर्वीत चाह्निकम् ।
गोमतीं च जपेद् विद्याम्"

इत्यादि च । तथा —

"गोसहस्रं शतं वापि दद्यात् सुचरितव्रतः ।
अविद्यमाने सर्वस्वं वेदविद्भ्यो निवेदयेत् ॥"

इति । गौतमे च "गां च वैश्यवद्" इत्यतिदेशः कृतः, वैश्यवधे च "प्राकृतं त्रैवार्षिकं ब्रह्मचर्यमृषभैकादशाश्च गा दद्यादि''त्येवम् । बृहस्पतिना तु —

"द्वादशाहेन गोघाती तस्मात् पापात् प्रमुच्यते ।
क्षीराहारो भवेत् तत्र क्षीरदध्यशनोऽपि वा ॥"

---

१. 'श', २. 'णा प्रा' ग. पाठः. ३. 'च्छ्रं वानि' ग. च पाठः. ४. 'तां भु' ग. पाठः. ५. 'याम्येऽपि' ङ. पाठः. ६. 'ग्वाद्रिपा' ग च. पाठः. ७. 'च । मौ', ८. 'त् ॥ गौ' ग. पाठ.

तथेदमन्यत् —

"गायत्र्या दशसाहस्रं जपेद् वा यावकाशनः ।
निर्मुण्डं वपनं कृत्वा मौनी कौपीनवस्त्रधृक् ॥
गवां मध्ये वसेद् गोष्ठे दिवा ताभिः समं व्रजेत् ।
चीर्णान्ते तु द्विजातिभ्यो दद्याद् गां हेममेव च ॥"

तथेदं तत्रैवान्यत् — "द्वादशरात्रं पञ्चगव्याहारः षड्रात्रं वा यावकाहारो गोष्ठे वसेत् । देशकालशरीरशक्त्यनुरूपं वा भवेत् । श्मश्रुनखाद्यपनयनं कृत्वा ब्राह्मणान् प्रणिपत्यानुज्ञातोऽन्ते गां वृषं वा तद्वधे दद्यात् । ब्राह्मणान् भोजयित्वा शुध्येदित्याह बृहस्पतिरि"ति । शातातपे तु "त्रीन् कृच्छ्रान् प्राजापत्यादीनाचरेद् गोमतीं च जपेदि"ति । पाराशरे तु —

"गवां बन्धनयोक्त्रेषु भवेन्मृत्युरकामतः ।
अकामतः कृतं पापं ब्राह्मणेभ्यो निवेदयेत् ॥"

इत्युपक्रम्य,

"सशिखं वपनं कृत्वा त्रिसन्ध्यमवगाहनम् ।
गवां मध्ये वसेद् रात्रौ दिवा गोभिः समं व्रजेत् ॥"

इत्यादिगोनुगमनप्रकारमुक्त्वा प्राजापत्यं कृच्छ्रमुक्तम् । "ततश्चीर्णान्ते ब्राह्मणभोजनम् अनडुत्सहितधेनुदानं चे"ति । एवं स्मृत्यन्तरेष्वप्येवंविधान्येव गोवधप्रायश्चित्तानि । अत्र च स्वयंभुवा —

"उपपातकिनस्त्वेवमेभिर्नानाविधैर्व्रतैः ।"

इत्युक्त्वोक्तम् — "उपपातकसंयुक्तो गोघ्न" इत्यादि । तेन ज्ञायते अस्त्युपपातकव्यतिरेकेणापि गोघ्नत्वम् । अन्यथा तु विशेषणानर्थक्यमेव स्यात् । तच्च द्विविधं — किञ्चिदुपपातकसंयोगादतिरिक्तं पातकान्तःपाति, किञ्चिच्चोपपातकाद् न्यूनम् । तत्र यद् "उपपातकसंयुक्तो गोघ्न" इत्येवमुपक्रम्य पठ्यते यथाङ्गिरसे, तस्य मानवेन वैकल्पिकत्वम् । यत्तु मानवाद् गुरुतरमसंयुक्तं च यथा गौतमीयं, यथा याम्ये —

१. 'ग्याः शतसा' ङ. च. पाठः. २. 'लवचश्शक्त्य' ग. पाठः. ३. 'त्वाभ्यनु' च. पाठः. ४. 'षभं वा', ५. 'यम्' ग. च. पाठः. ६. 'ता' ङ. पाठः, ७. 'तं', ८ 'क्यप्रसङ्गात्', ९. 'चैवोप', १०. 'त्युप' ग. पाठः,

"गोसहस्रं शतं वापि दद्यात् सुचरितव्रतः"

इति, तत्र च 'उपपातकसंयुक्तो गोघ्न' इत्येवंरूपत्वादुपक्रमस्य एतद् मानवेनाविशिष्टत्वाद् वैकल्पिकत्वेन व्याख्येयम् । अन्यत्तु सहस्रदक्षिणात्मकं पातकोचितत्वाद् गौतमीयवैकल्पिकत्वेन । शतदानमपि तस्मिन्नेव विषयेऽनुबन्धाद्यपेक्षया योज्यम् । यानि तु न्यूनानि शङ्खयाज्ञवल्क्यप्रचेतःप्रभृतिषु, तान्युपपातकसंयुक्तत्वेनानुपदेशादल्पत्वाच्च प्रागुपपातकाद् द्रष्टव्यानि । तत्र च क्रत्वर्थानां गवां वधे मानवादभ्यधिकानां विषयः । इतरत्र तु वधायैव प्रवृत्तस्य यो वधः, स उपपातकसंयोगः । यस्त्वन्यार्थं प्रवृत्तस्य भवति, स यद्युपपातकमध्ये पठ्यते, तथापि न्यून एव, "उपपातकसंयुक्तो गोघ्न" इति विशेषणसामर्थ्यात् । न चात्र परिग्रहालोचनया विषयव्यवस्था युक्ता, तस्य वधं प्रत्यनुपयोगात् । यत्तु ब्राह्मणसंस्थगोहरणे दण्डभूयस्त्वमुक्तं —

"गोषु ब्राह्मणसंस्थासु स्थूरिकायाश्च भेदने ।
पशूनां हरणे चैव दण्डः कार्योऽर्धपादिकः ॥"

इति, तत् तस्मिन्नेव स्तेयप्रकरणे युक्तम् । तत्र हि यदीयं यच्च द्रव्यं ह्रियते, तत्स्वरूपापेक्षयैव दण्डविशेषनिरूपणात् । इह तु यद्यप्यात्मीया हन्यते, तथापि तावदेवाभ्यधिकं वा प्रायश्चित्तं स्यात् । अतोऽत्र कस्येयं गौरित्येतन्नोपयुज्यते । ततश्च हीनसत्कृताया उत्तमसत्कृतायाश्च वधे हन्तृगतानुबन्धापेक्षयैव विषयकल्पना । वचनात् तु क्रत्वर्थहिंसायां दोषातिरेकावगतिः, यथाह शङ्खः—

"मारुताः पशवो याज्ञाः दैवीश्च मरुतो विशः ।
वैश्यहत्याव्रतं कुर्यादतस्तेषां प्रमापणे ॥"

इति । यद्यपि चात्र पशुमात्र उक्तं, तथापि गौतमीयाद् "गां च वैश्यवदि"ति वचनाद् गोविषयमेवैतदिति द्रष्टव्यम् । अन्यत्रापि च महतां प्रायश्चित्तानामेषैव प्रक्रिया योज्या । यथा स्वायम्भुवे —

"मार्जारनकुलौ हत्वा चाषं मण्डूकमेव च ।

---

१. 'प्रचेतसप्र', २. 'स्य' च. पाठः. ३. 'सत्कृतगो' ङ च. पाठः
४. 'तु' ङ. पाठः ५. 'कं प्र' ग. पाठः. ६. 'सक्तायामुत्त' ग. ङ पाठः.
७. 'सक्तायां च व' ग. पाठः.

श्वगोधोलूककाकांश्च शूद्रहत्याव्रतं चरेत् ॥"

इति । क्रत्वर्थानामेवैषां वध एतच्छूद्रहत्याप्रायश्चित्तं स्यात् । एवं स्मृत्यन्तरेष्वपि । यथा गौतमे — "मण्डूकनकुलकाकबिम्बदह्रमूषिकाश्वहिंसासु चे"ति । अत्रापि शूद्रहत्याव्रतमेव चशब्देनोपदिष्टम् । बिम्बः कृकलासः । दह्रमूषिका चुच्छुन्दरिका । मानवात्तु गुरुतरमेतत् । मानवेऽप्युक्तम् —

"एतदेव व्रतं कृत्स्नं षण्मासाञ्छूद्रहा चरेत् ।
ऋषभैकादशा वापि दद्याद् विप्राय गाः सिताः ॥"

इति । गौतमे तु — "शूद्रवधे संवत्सरं प्राकृतं ब्रह्मचर्यमृषभैकादशा गाश्च दद्यादि"ति । अत्रापि मानवं ब्राह्मणस्य क्रत्वर्थशूद्रवधे च । गौतमीयं त्वब्राह्मणविषयम् । एवमन्यत्रापि क्रत्वर्थपुरुषार्थापेक्षया हन्तृगतानुबन्धापेक्षया च हिंसाप्रायश्चित्तानां विषयकल्पना कार्या । केचित्तु समुच्चितानां मण्डूकादीनां वध एतदिति वर्णयन्ति । तत्तु हिंसासु चेति बहुवचनान्न्यायविरोधाच्चायुक्तम् । अतः क्रत्वर्थविषयतयैव व्याख्येयम् । तत्र च क्रत्वर्थामग्निहोत्रादिसाधनभूतां गां हत्वाकामतो वासिष्ठं, कामतस्तु गौतमीयम् । सोमयागाङ्गभूतायां संप्रक्रयण्यादावकामतो गौतमीयं, कामतस्तु याम्यं गोसहस्रदानमिति । एवमन्यान्यप्येवंप्रकाराणि व्याख्येयानि । पुरुषार्थायास्तु कामतो वधे मानवम्, अकामतस्त्वाततायित्वेन वा याज्ञवल्कीयम् । अकामेन चान्धकारादौ गौरित्येवमजानतो मृगव्याद्यधिकृतस्यास्त्येव वधप्रसङ्गः । नन्वाततायिवधे नैव दोषो युक्तः । सत्यं, पशूनां त्वबुद्धिपूर्वत्वात् प्रवृत्तेर्न मानुषैस्तुल्यकल्पत्वं युक्तम् । तथाच सुमन्तुः — "नाततायिवधे प्रायश्चित्तमन्यत्र गोब्राह्मणेभ्य" इति । अतस्तद्वधेऽपि प्रायश्चित्तमस्त्येव, आत्मत्राणपरत्वात् त्वकामत एव तत्र वध इति प्रायश्चित्ताल्पत्वं युक्तम् । यानि तु विशेषेणैव पठ्यन्ते, यथा—

"गवां बन्धनयोक्त्रेषु भवेन्मृत्युरकामतः"

इति पाराशरे, तानि श्रुतित एव व्यवस्थितानि । न चास्मिन् विषय उपपातकत्वम् । अतो यत् सामान्येनोच्यते —

१. 'काकोलूकगृध्रांश्च', २. 'सं शूद्र' ग पाठः. ३. 'व' च., 'वंविधः प्र' ग, पाठः. ४. 'वेप्रभवत्वा' च. पाठः. ५. 'कम् । अ' ङ. पाठः.

"प्रायश्चित्तीयतां प्राप्य दैवात् पूर्वकृतेन वा ।
न संसर्गं व्रजेत् सद्भिः प्रायश्चित्तेऽकृते द्विजः ॥"

इति, तत् पातकोपपातकविषयत्वादेवंविधे गोवधे न स्यात्, यत्रैवोपपातकत्वं तत्रैव भवति, न तु बन्धनयोजनादौ, व्यवहारोच्छेदप्रसङ्गात् । अतो यदि संगोपनाद्यर्थं बन्धने कृष्याद्यर्थं वा योजने तत्कृतो वधः स्यात्, ततः पाराशर्यं विज्ञेयम् । यत्तु —

"सायं संगोपनार्थाय न दुष्येद् रोधबन्धयोः ।"

इति, तद्रोधबन्धावेव निर्दोषौ न तु तन्निमित्तो वधोऽपि । तथाचान्यत्रोक्तम् —

"औषधं स्नेहमाहारं दद्याद् गोब्राह्मणस्य तु ।
तन्निमित्तं विपन्नेऽपि पुण्यमेव न पातकम् ॥"

इति, अन्यत्रास्त्येव दोष इति गम्यते । अन्ये तु संवर्ते एवेमं श्लोकं पठन्ति —

"निरुद्धानां गृहे दाहे वने वा श्वापदादिभिः ।
विद्युत्सर्पाग्निभिर्वापि मरणे नास्ति पातकम् ॥"

इति, तत्पुनर्विचार्यम् । यत्तु संवर्ते एव —

"एकश्चेद् बहुभिः कश्चिद् दैवाद् व्यापादितो भवेत् ।
पादं पादं हि हत्यायाश्चरेयुस्ते पृथक् पृथक् ॥"

इति, तद् गोवधप्रकरणेऽपि श्रुतं[3] ब्राह्मणादिहिंसास्वपि द्रष्टव्यं, कश्चिदित्यविशेषोपदेशात् । अयं चास्य विषयः — दुर्बलहिंसायां बहवो यदि मोचनसमर्थाः प्रत्येकं संभूय वा स्युः, तत्र यद्यन्योन्यापेक्षया विमोचनं न कृतं कथञ्चिद्दैवयोगात्, तत्रैकस्य यत् प्रायश्चित्तं प्राप्नोति, तस्य पादेनैकैकः शुध्यतीत्यभिप्रायः । पाराशर्योक्तं च सवर्णानामविशेषेणैव स्याद्, अविशेषोपदेशादेव । संवर्तोक्तं तु यदि कथञ्चिद् गां मरणायागतां वधादन्येन न शक्नोति परिहर्तुं, ततस्तत्रैवैकस्य द्रष्टव्यं — "गोघ्नस्यापि[4] प्रवक्ष्यामि निष्कृतिमि"ति । अपिशब्दोऽत्र रहितत्वं वधस्य ज्ञापयति । अतो जने-

१. 'नार्थ', २. 'ध्यर्थं' ग. पाठः. ३. 'त' ङ. पाठः. ४. 'मिति । अ' ग. पाठः.

पदेशादेवंभूते साक्षाद्वधे द्रष्टव्यम् । आङ्गिरसं तु मानवेन वैकल्पिकम् । तदपि जपोपदेशात् त्रैवर्णिकानामेव कामकृते वधे द्रष्टव्यम् । काश्यपीयं तु दोग्ध्र्यादिसंयोगेनैव चोदितत्वात् सुज्ञानमेव । दोग्ध्रो आदिर्येषां ते दोग्ध्र्यादयः । तत्र दोग्धुं यन्त्रितायां व्यापत्तौ तदर्थ एव च धमने[1] । या गौर्मृतवत्सादिका, तस्या धमनं क्रियते । तद् गोजीविनां प्रसिद्धम् । एवं घण्टाभरणादि विक्रयाङ्गतया यत् क्रियते, स्नेहौषधदानाद्यपि विक्रयार्थतयैव शीघ्रपोषणविवक्षया यत् क्रियते, तत् प्रत्येतव्यम् । एतदपि सार्ववार्णिकमेव । द्वितीयं तु काश्यपोक्तं शूद्रस्यैव सांवर्तैकविषयं द्रष्टव्यम् । पञ्चगव्याहारत्वे च प्रत्यहं भोजनम् । पयोभक्षित्वे तु षष्ठान्नकालता । समानमन्यत् । शङ्खोक्तमप्यस्मिन्नेव विषये शक्त्यपेक्षया योज्यम् । पैठीनसीयं त्वस्मिन्नेव विषयेऽनुगमनासमर्थस्य स्त्र्यादेर्द्रष्टव्यम् । सुमन्तुविहितं तु यदि गृहक्षेत्रखलादावुपद्रवं कुर्वती गौरभिहन्यमाना श्वभ्रादौ कथञ्चित् पतति, तद्विषयं स्त्र्यादीनामेव । समर्थानां चास्मिन्नेव विषये याम्यं —

"पादपाशनिबन्धाद्वा अतियोक्त्रातिवाहनात्"

इत्युपक्रम्य यद् विहितं —

"गोमूत्रयावकं मासमश्नन् गोभिः समं व्रजेत्"

इत्येतद् विज्ञेयम् । यत्तु तत्रैव—

"उपपातकसंयुक्तो गोघ्नो भुञ्जीत यावकम्"

इत्यादि, तदाङ्गिरसेन तुल्यकल्पम् । यत्तु तत्रैव—

"गोसहस्रं शतं वापि दद्यात् सुचरितव्रतः"

इति, तद् गौतमीयवैकल्पिकत्वेन क्रत्वर्थगोवधविषयं व्याख्यातमेव । बार्हस्पत्यं तु "द्वादशाहेन गोघाती"त्येतत् पाराशर्येण वैकल्पिकं त्रैवर्णिकानामेव । लक्षजपस्तु ब्राह्मणानामेव,

"जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः ।"

इति वचनात् । यत्तु तत्रैव "द्वादशरात्रं पञ्चगव्याहार" इति, तत् सौमन्तवेन[2] वैकल्पिकम् । यत्तु तत्रैव "षड्रात्रं यावकाहार" इति, तत् तस्मिन्नेव विषये बालवृद्धाद्यपेक्षया योज्यम् । शातातपोक्तं तु संवर्तोक्तवैकल्पि-

---

१. 'नदाने । या' ढ. पाठः. २. 'तम् । ब' ग. पाठः.

कत्वेनानुबन्धविशेषापेक्षया योज्यम्। एवं योगीश्वरोक्तानामपि परस्परतो विषयकल्पना। सर्वत्रैव च प्रायश्चित्तप्रकरणे—

"जातिशक्तिगुणापेक्षं सकृद् बुद्धिकृतं तथा।
अनुबन्धं परिज्ञाय प्रायश्चित्तं प्रकल्पयेत्॥"

इत्येतदेव संक्षेपसूत्रम्। तथा—

"अनुक्तनिष्कृतीनां तु पापानामपनुत्तये।
शक्तिं चावेक्ष्य पापं च प्रायश्चित्तं प्रकल्पयेत्॥"

इति। तथा—

"ते यां वेदविदो ब्रूयुस्त्रयोऽप्येनस्सु निष्कृतिम्।
सा तेषां पावनाय स्यात् पवित्रं विदुषां हि वाक्॥"

इति। एवं सर्वत्रापि योज्यम्। अयाज्ययाजनादावुपपातकवर्गे गोघ्नप्रायश्चित्तातिदेशाद् विशेषविहितैः सह विषयकल्पना कार्या। विशेषविहितं चैकं तावत् स्वायंभुवे—

"एतदेव व्रतं कुर्युरुपपातकिनो द्विजाः।
अवकीर्णिवर्जं शुद्ध्यर्थं चान्द्रायणमथापि वा॥"

इति। अथशब्दापिशब्दाभ्यां च स्मृत्यन्तरोक्तानामुपक्षेपः। तत्र चान्द्रायणं गोघ्नप्रायश्चित्तेन वैकल्पिकं, द्विजग्रहणात् तद्विषयमेव। यदपि योगीन्द्रोक्तम्—

"उपपातकशुद्धिः स्यादेवं चान्द्रायणेन वा"

इति। एवमिति गोघ्नप्रायश्चित्तानां पूर्वश्लोकविहितानामतिदेशः। चान्द्रायणं च

"यथाकथञ्चित् पिण्डानां चत्वारिंशच्छतद्वयम्"

इत्येतत् प्रत्येतव्यम्। तेनैतत् सार्ववर्णिकं सर्वोपपातकेषु द्रष्टव्यम्। शक्त्यपेक्षयैव च "पयसा वापि मासेन" इत्येतदपि विकल्पेनैव। "पराकेणापि वा पुनरि"त्यत्र चापिशब्दात् पुनःशब्दाच्च "जातिशक्तिगुणापेक्षमि"त्येतच्छ्लोकानुसारेण पुनरपीत्येवं योज्यम्। तथा चान्द्रायणेन पयसा वापीत्येवं व्यस्तसमस्ततयानुबन्धानुसारेण कल्पनेत्येषा दिक्। यत्र चोपपातके विशेषविहितमस्ति, तत्र तदपि विषयव्यवस्थया स्यात्। न तु विशेषविहित-

१. 'क' ड. पाठः. २. 'सार्व' ड. च. पाठः

त्वात् सामान्यस्यानङ्गीकरणम्, उपपातकमध्यपाठस्यानर्थक्यप्रसङ्गात्, यथा व्रात्यतायामुपनयनकालातिक्रमे प्राक् षोडशाद् वर्षात् पारस्कराक्त, "कालातिक्रमे नियतवदि"ति । नियतवदिति चाविज्ञाने प्रतिमहाव्याहृति तिसृभिर्होमः, सर्वाभिश्चतुर्थं सर्वप्रायश्चित्तं चेत्येतद् व्याचक्षते । तच्चैतदौपनायनिककालातिक्रमे प्रायश्चित्तम् । उपनीयमानस्य तु

"त्रिष्टुभं ब्राह्मणोऽतीत्य प्राजापत्यं समाचरेत् ।
अशक्तौ पादशः कुर्यात् ततः संस्कारमर्हति ॥"

इति हारीतवचनात् कृतप्रायश्चित्तस्यैवोपनयनमिति गम्यते । परतस्तु षोडशाद् वर्षान्मानवं—

"येषां द्विजानां सावित्री नानूच्येत यथाविधि ।
तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत् ॥"

इति । एतद् आद्वाविंशतेर्वर्षादनुपनीतस्य ब्राह्मणस्य, "पूर्वः पूर्व उत्तरोत्तरकालातिक्रमणे पतती"ति शङ्खवचनात् । गौतमानुसारेण सर्वेषामप्येव कालः "द्व्यधिकाया वैश्यस्ये"त्युक्तत्वाद्, "अत ऊर्ध्वं पतितसावित्रीका भवन्ती"ति वचनात् । ततः परं च वासिष्ठम्—"उद्दालकव्रतं चरेद् द्वौ मासौ यावकेन वर्तयेद् मासं पयसा अर्धमासमामिक्षया अष्टरात्रं घृतेन षड्रात्रमयाचितेन त्रिरात्रमब्भक्षोऽहोरात्रमुपवसेदश्वमेधावभृथं वा गच्छेदि"ति । यदि त्वाद्यादुपनयनकालादारभ्याद्याचत्वारिंशद्वर्षाणि नोपनीतस्ततोऽस्य व्रात्यस्तोमः, "यो व्रतकालमसंस्कृतोऽतिक्रामेत्, स आद्येन यजेते"ति व्रात्यस्तोमोपदेशात् । ये तूपनीताः सन्तोऽनधीत्य वेदमन्यत् किमपि कृतवन्तः, न च सन्ध्योपासनादि त्यक्तम्, अधीत्य वा यैः सन्ध्योपासनाद्याचरणे शैथिल्यं कृतं, तेऽपि त्रीणि कृच्छ्राणि प्रयत्नेन कृत्वा वेदं पठेयुः, आचारेऽपि च प्रयत्निनो भवेयुः । यथाह मनुः—

"प्रायश्चित्तं चिकीर्षन्ति विकर्मस्थास्तु ये द्विजाः ।
ब्रह्मणा च परित्यक्तास्तेषामप्येतदादिशेत् ॥"

इति । गौणप्रायश्चित्तस्य चोद्दालकव्रतवैकल्पिकत्वं, चान्द्रायणस्य तु कृच्छ्र-

१. 'मिति' ङ. च. पाठः. २. 'तस्रः । स' ग. पाठः. ३. 'दौप', ४. 'स्य श्रि', ५. 'मे प', ६. 'मातिदे', ७ 'दावाचारगणे', ८. 'णि कृ', ९. 'षु प्र', १०. ' ', ११. 'स्य कृ' ग. पाठः.

त्रयेणेति । एवमन्यान्यपि स्मृत्यन्तराणि व्याख्येयानि । स्तेयादिष्वप्ययमेव मार्गः । ग्रन्थव्याख्यायां च निपुणतो वक्ष्यामः । प्रकृतमिदानीमुच्यते ॥ २६२ ॥

स्त्रीशूद्रविट्क्षत्रवधस्योपपातकमध्यपाठात् सामान्येन प्रायश्चित्तमुक्तमेव — "उपपातकशुद्धिः स्यादेवं चान्द्रायणेन वा" इत्यादिना । इदानीं तु तेषामेव वैशेषिकं वक्तुमाह—

**ऋषभैकसहस्रा गा दद्यात् क्षत्रवधे पुमान् ।**
**ब्रह्महत्याव्रतं वापि वत्सरत्रितयं चरेत् ॥ २६३ ॥**
**वैश्यहाब्दं चरेदेतद् दद्याद्वैकशतं गवाम् ।**
**षण्मासाञ्छूद्रहा वापि दद्याद्वा धेनवो दश ॥ २६४ ॥**

ऋषभ एकोऽधिको यासां सहस्रस्य ता ऋषभैकसहस्राः । स्पष्टमन्यत् । पुमानिति च शूद्रस्यैवैतत् क्षत्रियादिवधे प्रायश्चित्तमित्येवमर्थम् अकामतश्च । यथाह मनुः—

"अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः ।
ऋषभैकसहस्रा गा दद्याच्छुद्ध्यर्थमात्मनः ॥"

इति । वृत्तस्थवधे चैतत्, "प्रमाप्य वैश्यं वृत्तस्थमि"ति ज्ञापकात् । नन्वेतद् ब्राह्मणस्यैव, द्विजोत्तम इति वचनात् । नायं द्विजोत्तम इति समानाधिकरणः, किं तर्हि, द्विज उत्तमो यस्येत्येवं बहुव्रीहिः प्रत्येतव्यः । कुत एतत्, अपकृष्टवधे चान्द्रायणोपदेशात् । तथाच द्वयोरेव श्लोकयोर्द्विजोत्तमग्रहणं कृतम्—

"एतदेव चरेदब्दं प्रायश्चित्तं द्विजोत्तमः ।
प्रमाप्य वैश्यं वृत्तस्थं दद्याद्वैकशतं गवाम् ॥"

इति । तृतीये तु

"एतदेव व्रतं कृत्स्नं षण्मासाञ्छूद्रहा चरेत्"

इत्यत्र नैवैतदस्ति, अनुपयोगात् । पूर्वत्र तु द्विज उत्तमो यस्य शूद्रस्य, क्षत्रियवैश्यौ वा । स यदि निकृष्टः सन्नुत्कृष्टं हन्यात्, तदैव तत् कुर्याद् इत्येवमर्थं तद्वचनम् । इह तु सजातीयस्य हन्तुस्तद्वचनमेवेत्यभिप्रेत्या-

वचनं युक्तं स्यात् । इतरथा त्वादावेवोक्तमधिकारादुत्तरत्रापि लभ्यत एवेति पुनर्न वाच्यं, सर्वत्र वा वाच्यम् । अतो योगीश्वरोयात् पुनर्वचनादिह चोक्तन्यायानुसाराच्छूद्राभिप्रायेणैवैतदिति युक्तम् । अतश्चोपपातकमध्यपाठोऽप्युत्कृष्टापेक्षयार्थवान् स्यात् । इतरथा तु तुल्यवदुपपातकमध्ये, सङ्कीर्तनमबुद्धिपूर्वमिव स्यात् । एवञ्च यच्छङ्खेनोक्तं — "सर्वेषामन्योन्यापकृष्टवधे चान्द्रायणमि"ति, तदपि समञ्जसं स्यात् । यदि त्ववश्यं द्विजोत्तमवचनाद् ब्राह्मणस्यैवैतदित्येवं समर्थनीयं, ततो वृत्तस्थवचनात् कर्मप्रयोगमध्यगतयोरित्येवं व्याख्येयं, सोमयागव्यतिरिक्तेष्टिपश्वादिविषयत्वेन च सवनसंबन्धेन ब्रह्महत्यातिदेशात् । कर्मगतव्यतिरेकेण तूपपातकप्रायश्चित्तमेव । तत्राप्यकामतश्चान्द्रायणं, कामतस्तु गोघ्नप्रायश्चित्तम् । अनुबन्धाद्यपेक्षया च जपादिभिः प्रतिपूरणम् । अपकृष्टानां त्वकामत एतत् । कामतस्तु—

"तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतः ।
वैश्येऽष्टमोंऽशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोडशः ॥"

इति । अवृत्तस्थे तु संवर्तोक्तं—

"प्रमाप्य क्षत्रियं मोहात् त्रिभिः कृच्छ्रैर्विशुध्यति ।
प्राजापत्यातिकृच्छ्राभ्यां तप्तकृच्छ्रेण च क्रमात् ॥
कृच्छ्रातिकृच्छ्रौ कुर्वीत स नरो वैश्यघातकः ।
शूद्रं हत्वा तु कुर्वीत कृच्छ्रं सान्तपनं तथा ॥"

इति । सोमव्यतिरिक्तक्रतुगते त्वकामतो निकृष्टस्य सजातीयस्य वा हन्तुर्गौतमीयं—"राजन्यवधे षड्वार्षिकं प्राकृतं ब्रह्मचर्यम् ऋषभैकसहस्राश्च गा दद्यात् । वैश्यवधे त्रैवार्षिकम् ऋषभैकशताश्च गा दद्यात् । शूद्रवधे तु संवत्सरम् ऋषभैकादशाश्च गा दद्यादि"ति । शूद्रोऽपि श्राद्धादौ प्रयोगमध्यस्थो यदि स्यात् । कामतस्तु वासिष्ठम्—"एवं राजन्यं हत्वाष्टौ वर्षाणि चरेत् षड् वैश्यं त्रीणि शूद्रमि"ति । सवनस्थवधे तु शूद्रस्यापस्तम्बोक्तं ब्रह्महत्याप्रायश्चित्तम् । सर्वत्र च जात्युत्कर्षापकर्षावालोच्य विशेषः कल्पनीयः ।

---

१. 'नू । इ' ग. पाठः. २. 'था तुल्य' क. पाठः. ३. 'व्य' ग. ङ. पाठः. ४. 'ति । वृ' ङ. पाठः. ५. 'तेऽपि त्व' ग., 'तत्वेऽका' ङ पाठः. ६. 'क म' ग. पाठः. ७ 'ष्ये त्रै', ८. 'ष्ठस' ङ. पाठः.

उक्तं च—"जातिशक्तिगुणापेक्षमि"ति । शङ्खोक्तमपि गौतमीयेनैकार्थमनुबन्धानुसारेण योज्यं—"चतुर्षु वर्णेषु प्रत्यर्थं द्वादश संवत्सरान् षट् त्रीन् एकं तदन्ते गोसहस्रं ततोऽर्धं तस्यार्धं तदर्धं च दद्यादि"ति । केचित् गौतमीयं ब्राह्मणसंबन्धेनैव मन्यन्ते । पूर्वसूत्राच्च "गर्भे चाविज्ञाते ब्राह्मणस्ये"त्यतोऽवच्छिद्य ब्राह्मणस्येत्युत्तरसूत्रेण योजयन्ति । ब्राह्मणस्य राजन्यवधे षड्वार्षिकमिति । ततश्चैतदनुसारादेव मानवेऽपि द्विजोत्तमवचनं विस्पष्टमेव ब्राह्मणविवक्षयोपपन्नं स्यात् । तत्त्विदं नातीव युक्तम् । एवं हि प्रत्युतानिष्टमापद्येत, ब्राह्मणवध एव राजन्यकर्तृके षड्वार्षिकव्रतप्रसङ्गात् । न च ब्राह्मणस्येत्येतत् कर्तृविशेषणम्, "उभयप्राप्तौ कर्मणि" इति नियमात् । ततश्च ब्राह्मणस्य कर्मत्वापत्तेरनिष्टप्रसङ्गः । अत एवोसहायप्रभृतिभिर्गर्भे चाविज्ञाते ब्राह्मणस्येत्येव व्याख्यातम् । अतो यथोक्तैव विषयकल्पना । तथाचाम्नायः—"तस्माद्यद्यपि राजा परमतां गच्छती"त्युपक्रम्य "वध एनं हिनस्ति स्वां योनिमृच्छति स पापीयान् भवति यथा श्रेयांसं हिंसित्वे"ति निकृष्टेन श्रेयसो वधं सिद्धवद् दृष्टान्तत्वेन दोषवत्तया दर्शयति । तथाच वाक्पारुष्ये स्वायंभुवं—

"शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति ।
वैश्योऽप्यर्धं शते द्वे वा शूद्रस्तु वधमर्हति ॥"

इत्यनेन निकृष्टानां यथोत्कर्षं दोषातिरेकमाह । तथा—

"पञ्चाशद् ब्राह्मणो दण्ड्यः क्षत्रियस्याभिशंसने ।
वैश्यस्य चार्धपञ्चाशच्छूद्रे द्वादशको दमः ॥"

इति यथापकर्षमपकर्षः । तथा—

"एकजातिर्द्विजातिं तु वाचा दारुणया वदन् ।
जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः ॥"

इति हेतुवन्निगदेनापकृष्टानामुत्कृष्टहिंसां गुर्वीमाह । एवमन्यान्यपि दण्डपारुष्यादिषु वचनान्यनुसरणीयानि ॥ २६३ ॥

---

१ 'प्य सह्या', २ 'स्य चेत्ये', ३. 'अ' ङ. पाठः ४. 'व च स', ५. 'तं', ६. 'च्छेदित्यु' ग. पाठः.

इदानीमुपपातकमध्यपाठात् स्त्रीवधस्य तदुक्तप्रायश्चित्तप्राप्तौ सत्यां क्वचिदपवाद-माह —

**दुर्वृत्तब्राह्मणक्षत्रविट्छूद्रस्त्रीप्रमापणे ।**

**दृतिं धनुर्बस्तमविं क्रमाद् दद्याद् विशुद्धये ॥ २६४॥**

दुर्वृत्तां ब्राह्मणादिसंबन्धिनीं स्त्रियं हत्वा क्रमशो दृत्यादीनि दे-यानि । दृतिरुदकोद्धारणार्थः कुरुण्ठः । बस्तो युवा छागः । स्पष्टमन्यत् । दुर्वृत्तस्त्रीप्रमापणं च राज्ञ एव विहितम् । यथाह मनुः संग्रहणाधिकारे—

"भर्तारं लङ्घयेद् या तु ज्ञातिस्त्रीगुणदर्पिता[1] ।
तां श्वभिः खादयेद् राजा संस्थाने बहुसंस्थिते ॥"

इति । गौतमे[2] तु प्रायश्चित्ताधिकार एवोक्तं — "श्वभिः खादयेद्राजा नि-हीनवर्णगमने स्त्रियं प्रकाशं पुमांसं घातयेदि"ति । अतो राज्ञ एवैतत् प्रायश्चित्तं नेतरस्य । ननु राज्ञो विहितानुष्ठानात्[3] प्रायश्चित्तमयुक्तम् । युक्तं च, यथैव साक्षिणामनृताभिधाने

"वाग्देवत्यैश्च चरुभिर्यजेरंस्ते सरस्वतीम्"

इत्यत्र । एतस्मादेव प्रायश्चित्ताभिधानाज्ज्ञायते[4] स्त्रीवधस्यात्यन्तमकर्त-व्यता । तथाचाम्नायोऽपि— "नवै[5] वै स्त्रियं घ्नन्ती"ति[6] । अत एव स्वा-यंभुवे —

"बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः ।
शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संपिबेत् ॥"

इति । अतश्च कामकृते स्त्रीवधे प्रायश्चित्ताभाव एव । अकामतस्तु कथ-ञ्चिद् दैवादापन्ने स्त्रीस्वरूपापेक्षया क्रत्वर्थाद्यपेक्षया हन्तृगतानुबन्धापेक्षया च प्रायश्चित्तानि योज्यानि । केचित्तु भर्तुरव्यवस्थितस्त्रीवधे दृत्यादिदानं मन्यन्ते । अन्ये तु सार्वत्रिकमेव । तत् पुनर्विचार्यम् ॥ २६४ ॥

एवं तावद् व्यभिचारिण्यां दृत्यादिदानमुक्त्वा इदानीम् अव्यभिचारिण्यामाह—

**अप्रदुष्टां स्त्रियं हत्वा शूद्रहत्याव्रतं चरेत्[7] ।**

**अस्थन्वतां सहस्रं च तथानस्थिमतामनः ॥ २६५ ॥**

---

१. 'गर्विता' ग. पाठः  २. 'मेन प्रा' ग च पाठः  ३. 'त्तानुष्ठानम' ग. पाठः. ४. 'तो पदेशाज्ज्ञा' ग. च. पाठः ५. 'चेत्' ग. पाठः, ६. 'ह' ग. ङ. पाठः. ७. 'या द्व' ग. पाठः.

अप्रदुष्टामव्यभिचारिणीं स्त्रियमकामतः कथञ्चिद्धत्वा शूद्रहत्याव्रतं[1] चरेत् । व्रतचरणोपदेशश्च "दद्याद् वा धेनवो दश" इत्यस्यर्थ[2] व्यावृत्त्यर्थो व्याख्येयः[3] । एतच्चापशदस्त्रीविषयमेव,

"निकृष्टजां तु निर्ज्ञातामुत्कृष्टायां च मातरि ।
अदुष्टां योषितं हत्वा षण्मासानेतदाचरेत् ॥"

इति बृहस्पतिवचनात् । एतच्छब्देन च तत्र पूर्वश्लोकाच्छूद्रहत्याव्रतं सांवत्सरिकमुक्तम् । इतरासु तु वासिष्ठम् "अनात्रेयीं राजन्यहिंसायां राजन्यां वैश्यहिंसायां वैश्यां शूद्रहिंसायां शूद्रां हत्वा संवत्सरमि"ति । गौतमीयमपि शूद्रायामनात्रेय्यामेवात्यन्तगुणवत्यां वधे द्रष्टव्यम्, "अनात्रेय्यां चैवमि"ति वासिष्ठानुसारात् । यत्तु मानवं — "कृत्वा च स्त्रीसुहृद्वधमि"ति, तदाङ्गिरसवचनाद्

"आहिताग्नेर्द्विजाग्र्यस्य हत्वा पत्नीमनिन्दिताम् ।
ब्रह्महत्याव्रतं कुर्यादात्रेयीघ्नस्तथैव च ॥"

इत्येतद्विषयमेव । शातातपोक्तं तु याज्ञवल्कीयेन वैकल्पिकम् । "स्त्रीघाती षण्मासान् कृच्छ्रमाचरेदि"[4]ति शङ्खोक्तस्य गौतमीयेन समानविषयत्वम् । "स्त्रीणां वधे शूद्रहत्याव्रतमादिशेदि"ति गुणातिशयापेक्षया योज्यम् । प्रवृत्तासु त्वनिष्पन्ने व्यभिचारेऽनुबन्धविशेषापेक्षयोपपातकप्रायश्चित्तानि योज्यानि । स्मृत्यन्तराण्यप्यनेनैव मार्गेण व्याख्येयानि, यथा स्त्रीवधे कृच्छ्रत्रयं सुमन्तुनोक्तम् । यथा चाङ्गिरसे —

"अनाहिताग्निपत्नीनां तथा विट्क्षत्रयोषिताम् ।
गोघातकव्रतं कुर्याच्छूद्राणां चैव नित्यशः ॥"

इति । संवर्ते तु —

"स्त्रियं प्रमापयेद् यस्तु तप्तकृच्छ्रं समाचरेत् "

इति । एवमन्यान्यपि मानसवाचिकादिव्यभिचारालोचनया योज्यानि । एवं श्लोकपूर्वार्धेन

"अप्रदुष्टां स्त्रियं हत्वा शूद्रहत्याव्रतं चरेत् ।"

---

१. 'न्य' ग. पाठः. २. 'र्थं', ३ 'यम्' ग. ङ च. पाठः. ४. 'कृच्छ्रपू', ५. 'व्यामत्य' ग. पाठः. ६. 'ति त' क. ङ. पाठ.. ७. 'च्छ्रं च', ८. 'ङ्खेनोक्त' क. पाठः.

इत्युक्त्वोत्तरार्धेन

"अस्थन्वतां सहस्रं च तथानस्थिमतामनः ।"

इत्येतदेव शूद्रहत्याव्रतमुक्तम् । येषां सास्थिकानां प्राणिनां विशेषेकं नोक्तं, तेषां सहस्रं हत्वा षाण्मासिकं शूद्रहत्याव्रतं कार्यम् । यानि चानस्थिकानि पिपीलिकादीनि, तेषां च यावन्त्यनसा शकटेन वोढुं द्वाभ्यां बलीवर्दाभ्यां मध्यमाभ्यां, तावत्परिमाणे स्यात् । "अनस्थ्नामनड्डुद्भार" इति गौतमस्मरणादनोगत एवानड्डुद्भारो गृह्यते, "पूर्णे चानस्यनस्थामि"ति मनुवचनात् । एतच्च यान्यहिंसकानि सन्ति व्यापद्यन्ते अनादिष्टविशेषणानि च, तद्विषयं द्रष्टव्यं,

"योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया ।
स जीवंश्च मृतश्चैव न क्वचित् सुखमेधते ॥"

इति मनुवचनात् । यानि तु हिंसास्वभावानि यूकमशकजलूकादीनि, तेषां यथासामर्थ्यमपनीयमानानां यदि वधोऽपि स्यात् तथाप्यदोष एव । कामतस्तु यूकादिष्वप्यस्त्येव दोषः । तथा यान्यप्यस्थिमन्त्यादिष्टप्रायश्चित्तानि च, नित्योपद्रवकारिणश्च सर्पमूषिकप्रभृतयः, तदपनयनार्थं च मार्जारादिसंग्रहादिप्रकारेण वधो निर्दोष एव । यानि च सम्मार्जनोपलेपनधान्यसंस्कारादिना हन्यन्ते, यानि चेन्धनाद्यनुप्रविष्टानि मणिकादिषु च, तत्राप्यदोष एव, वधे कर्मसाधनत्वेन शरीरधारणाङ्गत्वेन च प्रवृत्तेः । येषां कामभोगमात्रनिबन्धनैव प्रवृत्तिस्तेषां तत्राप्यस्त्येव दोषः । यदेतत् "पञ्च सूना गृहस्थस्य" इत्यत्र स्वयंभुवा प्रदर्शितम् । सहस्रग्रहणमनोग्रहणं चात्र भूयस्त्वोपलक्षणार्थं न नियमार्थम्, अर्वाग्पूर्वं च प्रायश्चित्तान्तरानुपदेशाद्, हन्यमानानां च समुच्चयोपादाने हेत्वभावाद् इत्येषा दिक् ॥ २६५ ॥

एवं तावत् सामान्येनोक्त्वाधुना केषाञ्चिद् वैशेषिकाण्याह —

**मार्जारगोधानकुलमण्डूकश्वपतत्रिणः ।**
**हत्वा त्र्यहं पिबेत् क्षीरं कृच्छ्रं वा पादिकं चरेत् ॥२६६॥**

स्वायंभुवे तु काकोलूकचाषाणामेव विशेषोपदेशः । सोऽपि च क्रत्वर्थविषयतया पक्षिमात्रोपलक्षणार्थो व्याख्येयः, अथापि नियमार्थः । तथा

१. 'त्वा शू', २. 'तान्यहिंसकस्वभावा' ग. पाठः. ३. 'देन'ङ. च. पाठः. ४. 'गनि' गै. पाठः. ५. पश्चित' क. ङ पाठः. ६. 'च भू' ग. ख. पाठः ७. 'वापि क' क. च. पाठः.

क्रत्वर्थवध एवेति व्याख्यातमेतत् । इह त्वक्रत्वर्थ एव त्रिरात्रं पयोभक्षता पादकृच्छ्रं वेति व्याख्येयम् । मानवेऽपि च —

"मार्जारनकुलौ हत्वा चाषं मण्डूकमेव च ।
श्वगोधोलूककाकांश्च शूद्रहत्याव्रतं चरेत् ॥"

इत्युक्त्वानन्तरमेवोक्तं —

"पयः पिबेत् त्रिरात्रं वा योजनं वाध्वनो व्रजेत् ।
उपस्पृशेत् स्रवन्त्यां वा सूक्तं वाब्दैवतं जपेत् ॥"

इति । न चैषां शूद्रहत्याव्रतेन वैकल्पिकत्वं युक्तम् । अतो यथोक्तैव विषयकल्पना । अत्रापि च स्नानाध्वगमने क्षत्रियवैश्ययोः, जपस्तु ब्राह्मणस्यैव, "जप्येनैव तु संसिध्येद् ब्राह्मण" इति वचनात् । पयःपानपादकृच्छ्रे तु शूद्रस्य । तथा च व्यासः —

"अनादिष्टव्रतादेशे शूद्रं तपसि योजयेत् ।
राजन्यवैश्यौ संस्कारे ब्राह्मणं जपकर्मणि ॥"

इति । तथा —

"यज्ञार्थप्राणिहिंसायां क्षुद्रजन्तुवधेष्वपि ।
पापकृत्यां वदन्त्यग्रां यज्ञाद्धि जगतः स्थितिः ॥"

इति । एवं स्मृत्यन्तराण्यपि व्याख्येयानि । यथाह्याङ्गिराः —

"गजे व्याघ्रे च तुरगे खड्गे कृष्णमृगे वृके ।
सिंहे शुनि वराहे च मयूरे पक्षिणामपि ॥
चाषे भासे च शीघ्रे च टिट्टिभे खञ्जरीटके ।
यथा शूद्रे तथा वध्या भगवानङ्गिराब्रवीत् ॥"

इति । केचित्तु 'यथा गवि तथे'त्येवं पठन्ति । सृगालोऽपि मयूर उच्यते,

"मयुर्मयूरो गोमायुः सृगालश्चेति शब्दितः"

इति नामरत्नमालावचनात् । तेनोक्तं मयूरे पक्षिणामपीति । अपिशब्दात् सृगालोऽपीत्यर्थः । शीघ्रः श्येनः । स्पष्टमन्यत् । यानि त्वतोऽत्यल्पतराणि, तान्यक्रत्वर्थानां प्राणिनामकामवधे व्याख्येयानि । यथा पाराशरे —

"हंसं ससारसं क्रौञ्चं चक्रवाकं सकुक्कुटम् ।
हत्वा मेषमयूरं च शुध्यते नक्तभोजनात् ॥"

तथा —

"चाषं भासं कपोतं वा शारिकां तित्तिरिं तथा।
अन्तर्जले उभे सन्ध्ये प्राणायामेन शुध्यति ॥"

तथा—

"गृध्रं श्येनं श्वाविडं च कपोतोलूकघातने।
अपक्वाशी दिनं तिष्ठेद् विलाले मारुताशनः ॥
हत्वा नकुलमण्डूकसर्पाजगरडुण्डुभान्।
कृसरं भोजयेद् विप्रं लोहदण्डश्च दक्षिणा ॥"

इति। तथा स्मृत्यन्तरेष्वप्युच्चावचान्युदाहृत्यानेनैव मार्गेण योज्यानि। यथा वासिष्ठे—"श्वमार्जारनकुलदहरमूषिकान् हत्वा कृच्छ्रं द्वादशरात्रं चरेत्। किञ्चिच्च दद्यादि"ति। एतत् क्रत्वर्थहिंसायामेव कामतः, इतरत्र वा गुरुतरानुबन्धे योज्यम् ॥ २६६ ॥

एवं तावद् मार्जारादीनां प्रायश्चित्तमुक्तम्। इदानीमन्येषां क्रत्वर्था[1]नामेव वधे आह—

**गजे नीला वृषाः पञ्च शुके वत्सो द्विहायनः।**
**खराजमेषेषु वृषो देयः क्रौञ्चे त्रिहायनः ॥ २६७ ॥**

मानवेनाभिन्नार्थत्वात् तत्र च प्राधान्येन क्रत्वर्थहिंसाया एवाधिकृतत्वात् "निपात्य वैश्यं वृत्तस्थम्" इति वृत्तस्थशब्दस्य यज्ञस्थवचनत्वादेतदपि तद्विषयतयैव व्याख्येयम्। स्पष्टमन्यत् ॥ २६७ ॥

**हत्वा श्येनकपिक्रव्याज्जलस्थलशिखण्डिनः।**
**भासं च हत्वा दद्याद् गामक्रव्यादेषु वत्सिकाम् ॥२६८॥**

क्रव्यं मांसमुच्यते, तद् भक्षयन्ति ये, ते क्रव्यादाः। ते च केचिज्जले बकादयः, केचित् स्थले गृध्रादयः। शिखण्डी मयूरः। स्पष्टमन्यत् ॥२६८॥

**उरगेष्वायसो दण्डः पण्डके त्रपुमाषकः।**
**कोले घृतघटो देय उष्ट्रे गुञ्जा हयेऽंशुकम् ॥ २६९ ॥**

उरगेष्विति बहुवचनं डुण्डुभादीनामपि ग्रहणार्थम्। पण्डकः षण्डः। कोलः सूकरः। गुञ्जा कृष्णलः। हयो घोटः। अंशुकं वस्त्रम्। सर्वत्र

---

१ 'र्थादीना' च. पाठः

प्रायश्चित्तप्रकरणे वचनाद् विना न परिग्रहकृतः कश्चिद् विशेष इत्येतद् गोवध एव व्याख्यातम् । केचित्तु पण्डकसुरगाधिकाराद् गोनसमाहुः । तत्रापि हि स्मरन्ति पलालभारम् ॥ २६९ ॥

**तित्तिरौ तु तिलद्रोणं गजादीनामशक्नुवन् ।**
**दानं दातुं चरेत् कृच्छ्रमेकैकस्य विशुद्धये ॥ २७० ॥**

तित्तिरिप्रकारेषु सर्वेषु कपिञ्जलक्रकरलावकादिषु तिलद्रोण एकैकस्य वधे देयः "गजे नीला वृषाः पञ्च" इत्येतस्मादारभ्य तित्तिरिपर्यन्तानां वधे यथोक्तदानाशक्तौ प्राजापत्यं प्रत्येकं चरेत् । केचित्त्वत एव ज्ञापकात् सर्वत्र हिंसाप्रकरणे दानस्य प्राथमकल्पिकत्वं मन्यन्ते । तत् त्वयुक्तं, त्रपुमाषकार्थे वृषपञ्चकार्थे चाविशेषेण कृच्छ्रदर्शनात् । न च तत् समुच्चितानाम्, एकैकस्येति वीप्सोपादानवैयर्थ्यात् । अतः शास्त्रस्यामीमांस्यत्वाद् गजादिष्वेव दानप्राधान्यम्, अन्यत्र तु तपस एवेति स्थितम् । तथाचाह मनुः —

"महापातकिनश्चैव शेषाश्चाकार्यकारिणः ।
तपसैव सुतप्तेन मुच्यन्ते किल्बिषात् ततः ॥"

इति । एवकारश्च प्राथमकल्पिकत्वं सर्वपापेषु तपसः स्पष्टयति । तथा —

"दानेन वधनिर्णेकं सर्पादीनामशक्नुवन् ।
एकैकशश्चरेत् कृच्छ्रं प्राजापत्यं विशुद्धये ॥"

इति । अत्रापि सर्पादीनामेव दानाशक्तौ तपः कार्यम्; अन्यत्र तु तपस एवाशक्तौ दानमिति । सर्वत्र च प्रायश्चित्तप्रकरणे यस्य तु दानं चोदितं तदनौपचारिकं द्रष्टव्यम् ॥ २७० ॥

सर्वत्रैव त्वनुक्तनिष्कृत्यर्थं —

**किञ्चित् सास्थिवधे देयं प्राणायामस्त्वनस्थिके ।**
**वृक्षगुल्मलतावीरुच्छेदने जप्यमृक्छतम् ॥ २७१ ॥**

किञ्चिदित्यविशेषाभिधानादत्यन्तनिकृष्टं भिक्षामात्रदानं प्रेत्येतव्यम् । अनुबन्धापेक्षया चातिरेककल्पना । स्पष्टमन्यत् ॥ २७१ ॥

---

१. 'र्च स' ग. च. पाठः. २. 'दातव्य' ङ. च. पाठः. ३. 'ञ्क' च. पाठः. ४. 'कर्तव्य' ग. च. पाठः.

एवं तावत् कर्तृत्वेन कारयितृत्वेन वा यत्र पापप्रसङ्गः, तत्र प्रायश्चित्तान्युक्तानि। अधुना यत्रान्यकर्तृकेऽपि व्यापारे कर्मादिभावमापन्नस्य पापोत्पत्तिः प्रायश्चित्तं च, तद् वक्तुमाह—

**पुंश्चलीवानरखरैर्दष्टश्चैव श्ववायसैः।**
**प्राणायामाञ् जले कृत्वा घृतं प्राश्य विशुध्यति॥२७२॥**

पुंश्चली गणिका, विप्लुता योषिदित्यन्ये। वानरादयः प्रसिद्धाः। चशब्दान्नखादिविलिखितस्याप्येतदेव प्रायश्चित्तम्। एवकाराच्चैकैकशः समुच्चितेऽपीति गम्यते। प्राणायामानिति बहुवचनं शरीरप्रदेशापेक्षया त्रिप्रभृतिशतपर्यन्तेष्वविशेषेण व्याख्येयम्। तथाच शङ्खः—"नरवायसखरवानरश्वपुंश्चलीभिर्दष्टः समुद्रगां नदीं गत्वा प्राणायामशतं कृत्वा घृतप्राशनेन शुध्यती"ति। अत्र चानादिष्टप्रायश्चित्तानां शरीरप्रदेशापेक्षयैव विषयकल्पना। सर्वत्रैव च यत्र समन्त्रकं प्रायश्चित्तमाम्नातं, तत्र स्त्रीशूद्रयोरपि तदेवामन्त्रकं प्रत्येतव्यम्॥ २७२॥

**फलपुष्पान्नरसजसत्त्वघाते घृताशनः।**
**स्यादोषधिवृथाच्छेदे क्षीराशी गोनुगो दिनम्॥२७३॥**

बदरौदुम्बरादिफलेषु कृमिमशकादीनि सत्त्वानि, तथा पुष्पेषु अन्ने चामे पक्के वा काञ्जिकादिषु रसेष्वन्येष्वप्येवंप्रकारेषु। घृताशी घृतेनैवैकरात्रवृत्तिः। एवं व्रीह्याद्योषधीनां वृथाच्छेदने च क्षीरव्रतो गवामेकादिनमनुगमनं कुर्यात्॥ २७३॥

सुप्तस्य जाग्रतो वा यद् रेतः स्कन्देत्, तत्र शौचमकृत्वैव—

**यन्मेऽद्य रेत इत्याभ्यां स्कन्नं रेतोऽभिमन्त्र्य वा।**
**स्तनान्तरं भ्रुवोर्वापि तेनानामिकया स्पृशेत्॥२७४॥**

वाशब्दः स्पर्शनानुमन्त्रणयोर्विकल्पार्थः। "यन्मेऽद्य रेतः पृथिवीमस्कात्" "पुनर्मामैत्विन्द्रियमि"त्येताभ्यां शतपथाधीताभ्यामृग्भ्यामनुमन्त्र्य तेनानामिकया कनिष्ठामध्यमयोरन्तरेण स्तनौ भ्रुवौ विनिमार्जयेत्, न चान्यच्छौचं कर्तव्यम्। अत्र च श्लोके स्पष्टानभिधानं छन्दोनुरोधात्। यत्तु स्मृत्यन्तरे शौचोपदेशः, स मन्त्रानधिकृतस्यानभिज्ञस्य वा प्रत्येतव्यः॥ २७४॥

**मयि तेज इतिच्छायां स्वां दृष्ट्वाम्बुगतां जपेत् ।**
**गायत्रीमशुचौ दृष्टे चापलेऽथानृतेऽपि च ॥ २७५ ॥**

"मयि तेज" इत्येतद् यजुः शतपथाम्नातं ब्राह्मणस्वरेणैव जप्यम् । स्पष्टमन्यत् ॥ २७५ ॥

उपपातकिमध्येऽवकीर्णिनोऽपि पाठात् प्रायश्चित्तान्तरं वक्तुमाह—

**अवकीर्णी भवेद् गत्वा ब्रह्मचारी तु योषितम् ।**
**गर्दभं पशुमालभ्य नैर्ऋतं स विशुध्यति ॥ २७६ ॥**

उपकुर्वाणो नैष्ठिको वा ब्रह्मचारी स्त्र्यभिगमनादवकीर्णीत्युच्यते । स च निर्ऋतिं गर्दभेनेष्ट्वा स्मृत्यन्तरोक्तं च तच्चर्मणा प्रावृतो व्रतं चरित्वा विशुध्यति । गर्दभं पशुमालभ्येत्येतत् कृत्स्नप्रयोगनिर्वृत्त्यभिप्रायेणैव व्याख्येयम् ॥ २७६ ॥

ब्रह्मचार्येव—

**भैक्षाग्निकार्ये त्यक्त्वा तु सप्तरात्रमनातुरः ।**
**कामावकीर्ण इत्येवं हुत्वाज्येनाहुतिद्वयम् ॥ २७७ ॥**
**उपस्थानं ततः कुर्यात् सं मा सिञ्चेत्यनेन तु ।**

"कामावकीर्णोऽस्मि", "कामाभिद्रुग्धोऽस्मि" इत्याभ्यामाज्याहुतिद्वयं पाकयज्ञविधानेन हुत्वा "सं मा सिञ्चन्तु मरुतः" इत्येतया तैत्तिरीयैराम्नातयर्चा[1] सूर्यमुपस्थाय शुध्यति । अर्वाक्[2] तु सप्तरात्रात्

"संध्यां यदि च नोपास्ते समिधो वापि नाहिताः ।
गायत्रीमापरं कालं जपन्नेनो व्यपोहति ॥"

इत्येवमादि स्मृत्यन्तरोक्तं द्रष्टव्यम् । इदं तु ब्रह्मचारिवनस्थपरिव्राजकानामविशेषेणैव प्रायश्चित्तम् ॥

**मधुमांसाशने कार्यः कृच्छ्रः शेषव्रतानि च[3] ॥ २७८ ॥**

यथाह[4] मनुः—

"व्रतचारी तु योऽश्नीयान्मधु मांसं कथञ्चन ।
स कृत्वा प्राकृतं कृच्छ्रं व्रतशेषं समापयेत् ॥"

---

१ 'याम्ना' च. पाठः. २. 'तक्य' ङ. पाठः. ३. 'वं' ग. पाठः. ४. 'तथाचाह' ग. ङ. पाठः.

इति । व्रतशेषं तु प्रायश्चित्तकालातिरेकेण समापनीयम् । प्राकृतं कृच्छ्रं प्राजापत्यमेव । स्पष्टमन्यत् ॥ २७८ ॥

गुरुश्च यदि स्वकार्येण ब्रह्मचारिणं क्वचित् प्रेषयेत्, तस्य च प्रवासोचितं मरणं स्यात् । तत —

**कृच्छ्रत्रयं गुरुः कुर्यान्म्रियेत प्रहितो यदि ।**

एतच्चान्यस्मिन्नपि वेतनाद्यपेक्षिण्याज्ञाकरे द्रष्टव्यम् ॥

शिष्यस्तु शक्त सन्नाज्ञातिक्रममन्यद् वा उपधानकान्तरारम्भि —

**प्रतिकूलं गुरोः कृत्वा तं प्रसाद्य विशुध्यति ॥ २७९ ॥**

स्मृत्यन्तराच्च सचेलं स्नात्वेति । गुरुग्रहणं चात्र सर्वमान्योपलक्षणत्वेन व्याख्येयम् ॥ २७९ ॥

एवं तर्हि प्रेषितव्यापत्तिवद् भेषजादिदानेऽपि व्यापत्तौ दोष स्यादित्याशङ्कामपाकर्तुमाह —

**औषधान्नप्रदानाद्यैर्भिषग्योगाद्युपक्रमैः ।**
**क्रियमाणोपकारे तु मृते विप्रे न पातकम् ॥ २८० ॥**
**विपाके गोवृषादीनां भैषज्याग्निक्रियासु च ।**

सर्वाङ्गयन्त्रितस्यातुरस्य भिषग्भिर्वैद्यैर्यै छेदनदाहादियोगा अनेकधा क्रियन्ते, ते भिषग्योगाः । भावशुद्ध्या क्रियमाणोपकारे ब्राह्मणे मृते वैद्यपरिचारकचिकित्साकारयितॄणां स्नेहादिभिश्च प्रभूतस्निग्धाद्यन्नदातॄणां च निर्दोषत्वम् । तथा गोवृषादीनां भैषज्याग्निदाहादिनिमित्तके विपाके सञ्जाते तन्निमित्तके वा मृत्यौ निर्दोषत्वम् । विप्रगोग्रहणं चोपलक्षणार्थम् ॥ २८०३ ॥

भैषज्यान्नप्रदानादिप्रभवेऽपि[1] मृत्यौ यदि दौष्ट्यात् पाण्डित्याभिमानाद वा दोषवत्तामारोप्य ब्रह्महा गोघ्नो वायमित्येवं —

**महापापोपपापाभ्यां योऽभिशंसेन्मृषा परम् ।**
**अब्भक्षो मासमासीत स जापी नियतेन्द्रियः ॥ २८१ ॥**

परग्रहणं यदि कश्चिच्छुभालुतयात्मानं दोषवत्तयाभिशस्य परिषदि निवेदयेद्, न तस्य दोष इति ज्ञापनार्थम् । जपे चाविशेषितेऽपि शुद्ध-

1. 'न्नप्रभ'-ग. पाठः.

वस्यैव। यथाह वसिष्ठः—"ब्राह्मणमनृतेनाभिशस्य पतनीयेनोपपतनीयेन वा मासमब्भक्षः शुद्धवतीरावर्तयेदि"ति। अत्र चाविशेषाभिधानेऽपि निमित्तवैषम्यान्महापतनीयाभिशंसने यथोक्तम्। उपपतनीये तु नियतेन्द्रियो जपन्नासीतेति व्याख्येयम्। स्पष्टमन्यत्॥ २८१½॥

अभिशंसकस्योक्तम्। यस्त्वसावभिशस्त., स.—

**अभिशस्तो मृषा कृच्छ्रं चरेदाग्नेयमेव वा।**
**निर्वपेत पुरोडाशं वायव्यं पशुमेव वा॥ २८२½॥**

पुरोडाशपश्वोराहिताग्निविषयत्वं निमित्तानुरूप्येण व्याख्येयम्। कृच्छ्रं त्वन्येषाम्। इदं चाभिशस्तस्य गेहदाहादिष्विव नैमित्तिकं, न तु दोषनिर्घातार्थं, दोषे प्रमाणाभावात्। जन्मान्तरीयदोषानुमानकल्पना तु शरीरोपादानादेवाग्निहोत्रादिष्वप्यविशिष्टा। यत्तु वासिष्ठम्—"एतेनाभिशस्तो व्याख्यात" इति, तद् यत्र कश्चित् कञ्चिदुद्दिश्यान्यायेन गृहीतस्वः स्वयं प्राणांस्त्यजति, तद्विषयं व्याख्येयं, नहि तत्रानृताभिशस्त इति विशेषणोपादानं यतः। इदं त्वभिशस्तो मृषा कृच्छ्रमिति विशेषितत्वाद् यथोक्तैव व्यवस्था॥ २८२½॥

**अनियुक्तो भ्रातृजायां गच्छंश्चान्द्रायणं चरेत्।**
**त्रिरात्रान्ते घृतं प्राश्य गत्वोदक्यां विशुध्यति॥२८३½॥**

नियुक्ताद् योऽन्यः सोऽनियुक्तः। न चान्यः कश्चित् तथाविधोऽस्ति। अतो नियोगकालादृतुकाललक्षणादन्यदा स एवानियुक्तः प्रत्येतव्यः। भ्रातृजाया च ब्राह्मणस्यापि क्षत्रिया भवत्येव। अन्यस्यां तु सोदर्यभ्रातृजायायां गुरुतल्पप्रायश्चित्तमेव। उदक्यां तु त्रिरात्रान्ते चतुर्थेऽहनि गत्वा घृतप्राशनम्। अन्ये तूदक्यागमने त्रिरात्रोपोषितस्त्रिरात्रान्ते घृतं प्राश्य विशुध्यतीत्येवं व्याचक्षते। तत् त्वयुक्तं, रजस्वलागमने सान्तपनस्य मनुनोक्तत्वादिहापि रजस्वलामुखास्वादोपलक्षितस्याभिगमनस्यैव सुरापानसाम्योपदेशात्। अतो यथोक्तैव व्याख्या ज्यायसी॥ २८३½॥

इदानीं शूद्रादन्यस्माद् वा पापकारिणः प्रतिग्रहे प्रायश्चित्तमाह—

**गोष्ठे वसन् ब्रह्मचारी मासमेकं पयोव्रतः।**
**गायत्रीजापनिरतो मुच्यतेऽसत्प्रतिग्रहात्॥ २८४½॥**

---

१. 'त्व एव' क ग. पाठः

असतः शूद्रादेरप्रतिग्राह्यस्य वाभिशस्तादेर्यः प्रतिग्रहः सोऽसत्प्रतिग्रहः । गायत्रीजापनिरतत्वं चान्वहं त्रिसाहस्रो जपः । स्पष्टमन्यत् । तथाच मानवं —

"जप्त्वा तु त्रीणि सावित्र्याः सहस्राणि समाहितः ।
मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहात् ॥"

इति । प्रत्यहं च त्रिसाहस्रो जपः पयोव्रतत्वं चेति ॥ २८४½ ॥

इदानीं व्रात्ययाजकस्याभिचरतश्च प्रायश्चित्तमाह —

**त्रीन् कृच्छ्रानाचरेद् व्रात्ययाजकोऽभिचरन्नपि ।**
**वेदप्लावी यवाश्यब्दं त्यक्त्वा च शरणागतम् ॥ २८५½ ॥**

विशुध्यतीति शेषः । अपिशब्दाद् यश्चाभिचरतो याजकः । यवान्नभोजनं यवाशिता । स्पष्टमन्यत् ॥ २८५½ ॥

**प्राणायामांश्चरेत् स्नात्वा खरयानोष्ट्रयानगः ।**
**नग्नः स्नात्वा च सुप्त्वा च गत्वा चैव दिवा स्त्रियम् ॥२८६॥**

खरैर्युक्तं यानं खरयानं, तथैवोष्ट्रैर्युक्तमुष्ट्रयानम् । प्राणायामास्त्रयः । अनुबन्धाभ्यासाद्यपेक्षया तदभ्यासकल्पना । स्पष्टमन्यत् ॥ २८६½ ॥

**गुरुं त्वङ्कृत्य हुङ्कृत्य विप्रं निर्जित्य वादतः ।**
**हत्वावबध्य वा क्षिप्रं प्रसाद्योपवसेद् दिनम् ॥ २८७½ ॥**

गुरुं पित्रादिकं मान्यं त्वमित्येवंप्रकारं मानरहितमाभाष्य, ब्राह्मणं वा निरपराधिनं हुङ्कारादिना निर्भर्त्स्य वा, विवादे वा लौकिके विनिर्जित्य क्रोधातिशयाद्वा परिभवमात्रकरणाय हस्तादिना हत्वा अवबध्य वा वस्त्राद्याकर्षणादिना, क्षिप्र प्रसाद्य नक्तं भुञ्जीत उपवसेद् वा । अनुबन्धाद्यपेक्षया त्वभोजनाभ्यासः ॥ २८७½ ॥

यदि तु वधबुद्ध्यैव क्रोधाद् ब्राह्मणाय दण्डोद्यमनादि कुर्यात्, ततः—

**विप्रदण्डोद्यमे कृच्छ्रस्त्वतिकृच्छ्रो निपातने ।**
**कृच्छ्रातिकृच्छ्रोऽसृक्पाते कृच्छ्रोऽभ्यन्तरशोणिते ॥२८८॥**

"कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम्"

इति वक्ष्यमाणः । यद्वा कृच्छ्रसहितोऽतिकृच्छ्रः कृच्छ्रातिकृच्छ्रः । स्पष्टमन्यत् ॥ २८८½ ॥

सर्वत्रैव प्रायश्चित्तप्रकरणेऽधिकार्थपेक्षयैव—

**देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः ।**
**प्रायश्चित्तं प्रकल्प्यं स्याद्यत्र चोक्ता न निष्कृतिः ॥**

सर्वथाधिकृतसामर्थ्याद्यपेक्षया गुरूणां लघूनां च प्रायश्चित्तानां विषयकल्पनं, न तु प्रकारान्तरेणेत्यभिप्रायः । यत्र च निन्दार्थवादादिना लोकव्यवहारप्रातिलोम्येन वा दोषवत्ता ज्ञाता, न च प्रायश्चित्तं विशेषतः किञ्चिदाम्नातं, तत्र स्मृत्यन्तरोपदिष्टानां जपादीनामेवाधिकृतसामर्थ्यानुगुण्येन प्रायश्चित्तकल्पना । स्पष्टमन्यत् ॥ २८९ ॥

एवं तावदुक्तनिष्कृतीनामनुक्तनिष्कृतीना च प्रायश्चित्तावगमप्रकार उक्त. । यदि तु कश्चिन्नास्तिक्यान्न प्रायश्चित्तं कुर्यात्, स च परिभाष्य[1] भूयोभूयः परित्याज्य एव । तस्य च तथाविधस्य नास्तिक्यातिशयाद् दुरात्मनः पतितस्योदकच्छेदमनेन प्रकारेण कर्तु—

**दासीघटमपां[2] पूर्णं निनयेरन् स्वबान्धवाः ।**
**पतितस्य बहिष्कुर्युः सर्वकार्येषु चैव तम् ॥ २९० ॥**

दासीगृहात् तदीयानामेवापां पूर्णं घटमानीय बहिर्ग्रामाद् दक्षिणां दिशं[3] निष्क्रम्य सर्वज्ञातिगुरुशिष्यर्त्विक्समक्षं सपिण्डसमानोदकाः पदा विपर्यस्यानवेक्षमाणा गृहानेत्य एकरात्रं क्षपयेयुः । सर्वकार्येषु च दृष्टादृष्टनिबन्धनेषु तं बहिष्कुर्युः । तथाचाह मनुः —

"पतितस्योदकं छेद्यं सपिण्डैर्बान्धवैर्बहिः ।
निन्दितेऽहनि सायाह्ने शिष्यर्त्विग्गुरुसंनिधौ[4] ॥"

इत्यादि ॥ २९० ॥

यद्वा त्यक्तोऽसौ पश्चात्तापात् प्रायश्चित्तं करोति, ततस्तदा तस्मिन् —

**चरितव्रत आयाते निनयेरन् नवं घटम् ।**
**जुगुप्सेयुर्न चाप्येनं संपिबेयुश्च सर्वशः ॥ २९१ ॥**

स्पष्टार्थः श्लोकः । तथाच मनुः —

"चरितव्रत आयाते पूर्णं कुम्भमपां नवम् ।

---

१. 'न्य', २. 'टं बहिर्ग्रामाग्नि' ग. पाठ ३. 'शि' ङ. पाठः. ४. 'ज्ञात्यृत्वि' ग. पाठः.

तेनैव सार्धं प्राश्नेयुः स्नात्वा पुण्ये जलाशये ॥"

इत्यादि ॥ २९१ ॥

यश्चैष घटापवर्जनादिको विधिरुक्तः पतितानाम् —

**एष एव विधिः स्त्रीणां पतितानां प्रकीर्तितः ।**
**वासो गृहान्तिके देय अन्नं वासः सरक्षणम् ॥२९२॥**

स्त्रीणां पतितानां प्रायश्चित्तमकुर्वतीनामेष एव घटापवर्जनविधिः प्रकर्षेण मन्वादिभिः कीर्तितो विहितः । अयं तु विशेषः — यदा ताः प्रायश्चित्तानुष्ठाने प्रवर्तन्ते, तदा तासां स्वगृहसमीपे निवास आवसथो देयः, अन्नं च भोजनं प्रायश्चित्तानुगुण्येन देयं, वासश्च परिधानं सह रक्षणेन, इति । तथाच स्वायंभुवम् —

"एष एव विधिः कार्यो योषित्सु पतितास्वपि ।
वस्त्रान्नमासां देयं तु वसेयुश्च गृहान्तिके ॥"

इति । विशेषपतनीयेषु परित्याग एवेत्येवमर्थः पूर्वमाम्नातस्यापि पुनः पाठः ॥ २९२ ॥

**नीचाभिगमनं गर्भपातनं भर्तृहिंसनम् ।**
**विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम् ॥ २९३ ॥**

अपिशब्दः स्त्रीणामपीत्येवं योज्यं, न मृदुहृदयता कार्या कथं स्त्रियः परित्यज्यन्त इति । एतानि हि स्त्रीणामपि ध्रुवं निश्चितं विशेषपतनीयानि परित्यागकारणानीत्यभिप्रायः ॥ २९३ ॥

यथैव च नीचाभिगमनादिषु स्त्रीणामात्यन्तिकः परित्यागः, तथैव च —

**शरणागतबालस्त्रीहिंसकान् संपिबेन्न तु ।**
**चीर्णव्रतानपि सतः कृतघ्नसहितानिमान् ॥ २९४ ॥**

न चैतन्निन्दार्थं वचनम्, असंव्यवहार्या एव शरणागतादिहन्तारश्चीर्णप्रायश्चित्ता अपीत्येवमर्थत्वादुपदेशस्य । प्रायश्चित्तोपदेशात्तु जन्मान्तरे निर्दोषा एवेत्यवसेयम् ॥ २९४ ॥

---

१. 'स्त्रे' ग. पाठः. २. 'पे निवासस्समीपे नि' ग च. पाठः.

न केवलं शरणागतहन्त्राद्योऽसंव्यवहार्याः, अन्येऽपि । येषां घटापवर्जनं कृतं, तेऽपि हि कृतप्रायश्चित्ताः पुनर्नवे घटेऽप्सु प्रक्षिप्तेऽपि गोभिरसत्कृता असंव्यवहार्या इत्येतद् दर्शयितुमाह —

**घटेऽपवर्जिते ज्ञातिमध्यस्थः प्रथमं गवाम् ।**
**प्रदद्याद् यवसं गोभिः सत्कृतस्य सहक्रिया ॥ २९५ ॥**

कार्येति शेषः । गोभिर्यवसभक्षणं गोसत्कारः । स्पष्टमन्यत् ॥ २९५ ॥

एवं तावत् प्रख्यातपापानां प्रायश्चित्तान्यभिधायाधुना रहस्यप्रायश्चित्तानि प्रस्तोतुमाह —

**विख्यातदोषः कुर्वीत पर्षदानुमतं व्रतम् ।**
**अनभिख्यातदोषस्तु रहस्यं व्रतमाचरेत् ॥ २९६ ॥**

तथाचाह मनुः —

"एतैर्द्विजातयः शोध्या व्रतैराविष्कृतैनसः ।
अनाविष्कृतपापास्तु मन्त्रैर्होमैश्च शोधनैः ॥"

इति । द्विजातयोऽप्याविष्कृतैनसः परिषदा प्रायश्चित्तार्थं कृतोपसदनाः शोध्याः । ये त्वनाविष्कृतैनसो द्विजातयः श्रुतिस्मृत्यर्थतत्त्वज्ञाश्च, ते परिषद्यनिवेद्यैव वक्ष्यमाणैरघमर्षणादिमन्त्रजपैः शाकलादिभिश्च होमैः शोधनार्थमुपदिष्टैः स्वयमेवात्मानं शोधयेयुरित्यभिप्रायः । अविदुषामद्विजातीनां चानाविष्कृतैनसामप्युपरितनः श्लोकारम्भो मानव एव —

"ख्यापनेनानुतापेन तपसाध्ययनेन च ।
पापकृन्मुच्यते पापात् तथा दानेन चापदि ॥"

इति । रहस्यं व्रतं पार्श्वस्थैरप्यविदितं धर्मव्याजादिना कर्तव्यम् । यत्तु स्मृत्यन्तरं —

"धर्मव्याजेन यो मोहात् प्रायश्चित्तं समाचरेत् ।
न तस्य तेन शुद्धिः स्यादेनस्वी चाधिकं भवेत् ॥"

इति, तदाविष्कृतपापविषयं द्रष्टव्यम् । न चात्रेतचोद्यं — किमित्यनाविष्कृतैनसामल्पं प्रायश्चित्तमिति । अमीमांस्यत्वाच्छास्त्रस्य । वेदृत्तयैव च तस्यैनसा सम्बन्धाभावात् । तथाच "वेदाभ्यासरतं क्षान्तमि"त्यादि वक्ष्य-

त्येव । आत्मशुद्धिप्रधानत्वाच्च प्रवृत्तेर्युक्तमेव प्रायश्चित्ताल्पत्वम् । रहस्यप्रकारश्च लोकतः । विद्वानविद्वत्संनिधौ प्रकाशमपि पापं कृत्वा स्वयमेव वेत्ति, इतरे त्वनेन पापं कृतमित्येवं न जानन्ति, तत् प्रकाशकृतमपि रहस्यमेव । एवं देशकालादिनिमित्तेनाप्यपरिज्ञानेन रहस्यता योज्या ॥ २९६ ॥

एवं रहस्यप्रायश्चित्तानां विषयमुक्त्वाधुना तान्युपदिशति —

**त्रिरात्रोपोषितो जप्त्वा ब्रह्महा त्वघमर्षणम् ।**
**अन्तर्जले विशुध्येत दत्त्वा गां च पयस्विनीम् ॥ २९७ ॥**

त्रिरात्रमुपोष्यान्तर्जले निमग्नोऽघमर्षणं जप्त्वा गां च पयस्विनीं ब्राह्मणाय दत्त्वा विशुध्यतीत्येवं योजना । अन्ये तु त्रिरात्रोपोषितोऽन्तर्जलेऽघमर्षणं जप्त्वा विशुध्येत, गां च पयस्विनीं दत्त्वा विशुध्येत, इत्येवं प्रायश्चित्तद्वयं वर्णयन्ति । तथाच सति पूर्वं चतुर्णामप्याश्रमाणां प्रायश्चित्तम्, उत्तरं तु दानाधिकृतानामेवेति महाविषयतापि शास्त्रस्याभ्युच्चयाय स्यात् । तथाच स्वयंभुवा दानरहितमेव त्रिरात्रोपोषितस्याघमर्षणं जप्यमुक्तं —

"त्र्यहं तूपवसेद्युक्तस्त्रिरह्नोऽभ्यवयन्नपः ।
मुच्यते पातकैः सर्वैर्जप्त्वा त्रिरघमर्षणम् ॥"

इति । अतो भेदकल्पनापि युक्तैव ॥ २९७ ॥

साग्निकस्य तु ब्राह्मणवधे पूर्ववैकल्पिकत्वेन प्रायश्चित्तान्तरमाह —

**लोमभ्यः स्वाहेति हि वा दिवसं मारुताशनः ।**
**जले सुप्त्वाभिजुहुयाच्चत्वारिंशद्घृताहुतीः ॥ २९८ ॥**

दिवसं मारुताशन इत्युदकपानप्रतिषेधार्थम् । अन्यत्राप्येवं व्याख्येयम् । जले सुप्त्वेति रात्रिमुदके तिष्ठेदित्यर्थः । ततः पाकयज्ञविधानेनौपासने लोमभ्यः स्वाहेत्यादिभिः शुक्रियाधीतैश्चत्वारिंशदाज्याहुतीर्जुहुयात् ॥ २९८ ॥

सुरापस्वर्णहारिणोस्तु —

**त्रिरात्रोपोषितो हुत्वा कूष्माण्डीभिर्घृतं शुचिः ।**
**सुरापः स्वर्णहारी तु रुद्रजापो जले स्थितः ॥ २९९ ॥**

